'मास्टर' मणिमालायाः १६७ संख्यको मणिः
(न्यायविभागे ५)

* श्रीः *

# प्रामाण्यवाददीपिका

प्रणेता

पण्डितश्रीवामाचरणभट्टाचार्यः

प्रकाशकः
मास्टर खेलाड़ीलाल एण्ड सन्स,
संस्कृत बुकडिपो,
कचौड़ीगली, बनारस सिटी

मूल्यं द्वादशाणकाः

'मास्टर'मणिमालायाः १६७ संख्यको मणिः ( न्यायविभागे ५ )

# PRAMANYAVADADEEPIKA

BY

Pt. VAMACHARANA BHATTACHARYA.

* श्रीः *

# प्रामाण्यवाददीपिका

श्रीमन्महामहोपाध्यायगङ्गेशोपाध्यायविरचितचिन्तामणेः श्रीमन्महामहोपाध्यायरघुनाथशिरोमणिकृतदीधितेः श्रीमन्महामहोपाध्यायगदाधरभट्टाचार्यविरचितव्याख्यामवलम्ब्य

श्रीमद्वामाचरणभट्टाचार्य-तर्कतीर्थ-न्यायाचार्येण विरचिता ।

श्रीमत्स्वामि "निर्दोषानन्द" "योगीन्द्रानन्द"योः साहाय्येन संशोधिता च ।

प्रकाशकः—

मास्टर खेलाड़ीलाल ऐण्ड सन्स

* ॐ *

# ❀ समर्पणाङ्क ❀

विपुलभारतविख्यातकीर्त्तये

धार्मिकप्रवराय

सुविदितवेदान्तादिशास्त्रतत्त्वाय

प्रतिपालितानेकपण्डितप्रवराय

श्रीमते श्रेष्ठश्रेष्ठिने

गौरीशङ्करगोयनकामहोदयाय

सादरमिदम्

पुस्तकम्

सुसमर्प्यते

श्रीवामाचरणभट्टाचार्येण

३२-१७१ नं०, देवनाथपुरा,

काशीधाम।

ॐ

# ❋ विज्ञापनम् ❋

क्षणभङ्गस्य भङ्गाय नास्तिकाज्ञानहानये
अलीकाद्वैतवादस्य विनाशाय जगत्पतेः ॥ १ ॥
प्रतियोगितया सत्यमनुयोगितया तथा
विज्ञानं यस्य सापेक्षं नौमि तं परमेश्वरम् ॥ २ ॥

इह खलु **प्रामाण्यवादो** ग्रन्थो न्यायशास्त्रे सुप्रसिद्धः सकलदर्शनविदां समादरकुसुमैः साधकानामिवार्चनीयतामासादयतीत्यत्र नास्ति सन्देहः। महर्षिप्रणीतन्यायशास्त्रैकदेशार्थप्रतिपादकतया निरुक्तग्रन्थस्यापि मुक्तिप्रयोजकत्वं वर्णयतो नव्यन्यायंप्रसवित्रे **महामहोपाध्यायगङ्गेशोपाध्यायाय** सहस्रवारं नमस्कारं विज्ञापयता मयाऽस्य ग्रन्थकर्त्तुः परिचयः सङ्क्षेपतस्तावत्प्रकाश्यते। अयन्तु प्रसिद्धमिथिलानगरान्तर्गतमङ्गरौनीनामकग्रामे पञ्चदशशताब्दीतः पूर्वमुत्पन्नः। अस्य पिता तु गौडप्रदेशीयः कारणवशान्मिथिलानगरवास्तव्यः। अत एव बङ्गप्रदेशे तावदयं प्रवादो वर्त्तते यद्गङ्गेशोपाध्यायो गौडे मातुलालये एव प्रतिपालित इति। अस्य मातुलो महानैयायिक आसीत्, तस्य तु बहव एव विद्यार्थिन आसन्। गङ्गेशोपाध्यायस्तु षोडशवर्षपर्यन्तं किमपि नाधीतवान्, किं बहुना तदानीं तस्याक्षरज्ञानमपि नासीत्। स खलु मातुलालये कृतगोरक्षणव्यापारो मातुलशिष्याणां वचनं सर्वथा प्रतिपालयति स्म। एकदा शीतकाले रात्रौ मातुलविद्यार्थिनोऽध्ययनार्थमग्निमानेतुमसमर्थास्तमेव गङ्गेशमाहूय कथितवन्तस्त्वमदूरस्थात् श्मशानादग्निमानयेति। तच्छ्रुत्वा तेन कथितं यदि श्मशानेऽस्मदीयं भयकारणं वर्त्तते तदाऽहं किं करिष्यामीत्युक्तिमाकर्ण्य छात्रास्तावदेवमूचुः श्मशानात् किं भयं भोः दुर्गा दुर्गेति नामस्मरणादेव विगतभीस्त्वं भवितुमर्हसि। ततस्तदानीं रात्रिद्वि-

प्रहरसमये अग्न्याहरणाय निर्मक्षिकं श्मशानं प्राप्तवता तेन स्वपात्रेऽग्निस्थापनसमये श्मशानसविधे शिवादीनां सञ्चरणं दृष्ट्वा प्रभूतभीतचेतसा दुर्गा दुर्गेति नामस्मरणं कृतम् । ततस्तस्य जन्मान्तरीयतपःप्रभावात् स्वयमेव तारिणी तत्रागतवतीत्येवमाह कथं त्वयाऽहमाहूतेति । गङ्गेशस्त्वनुक्तवचनो भीतो मुद्रितनयनस्तदानीमासीत् । इत्यालोक्य कृपामयी भवतापहरा जगज्जननी तस्मै विशेषज्ञानं प्रदत्तवती तत्रैव स्वरूपं प्रकाशयन्ती तमाश्वासयन्ती च विराजते स्म । ततः प्राप्तविशेषज्ञानो गङ्गेशो भगवतीं प्रार्थयामास । हा देवि जगन्मातः ! मां सर्वशास्त्रार्थदर्शिनं जगद्विदितसम्मानश्च विधाय मदीयमोक्षप्रयोजिका च त्वं भवेति । ततस्तथाऽस्त्वित्युक्त्वाऽन्तर्हितायां भगवत्यां स्वभवन प्राप्य गङ्गेशो निद्रितमातुलशिष्यान् विलोक्य निजविद्यापरीक्षार्थं समवलोकितसमस्तमातुलग्रन्थस्तानेव ग्रन्थानितस्ततो निक्षिप्य प्रभातसमये गवां संरक्षणार्थं बहिर्गत स्ततो भोजनसमये यथानियमं महानसाद् बहिरुपविष्टो मातुलानीदत्तपर्युषितमन्नं भुञ्जानो मातुलानीं प्राह–अयि मातुलानि ! त्वं प्रतिदिनमेवाऽस्यां गङ्गायां निजपितुरस्थि कथं निक्षिपसि, तवाऽन्या काचिदपि गङ्गा न वर्तते ? श्रुत्वेदं मातुलेन कथितम्–अरे गौ ! मम पुस्तकानीतस्ततो निक्षिप्येदानीं पाण्डित्यं प्रकाशयसि । तिष्ठतु तावद्, भोजनानन्तरं तुभ्यमस्य कर्मणः फलं प्रदास्यामीति । ततो गङ्गेशोपाध्यायेन भणितम् ।

"किं गवि गोत्वं ? किमगवि गोत्वम् ?<br>
गवि यदि गोत्वं, मयि न हि तत्त्वम् ।<br>
अगवि च गोत्वं यदि भवदिष्टम्<br>
भवति भवत्यपि सम्प्रति गोत्वम ॥"

इत्ययं प्रवादो गौडप्रदेशेऽधुनाऽपि प्रचलति । अस्य च प्रवादस्य समूलत्वं निर्मूलत्वं वेत्यन्यदेतत् । वस्तुतस्तु महामहोपाध्यायगङ्गेशोपाध्यायो नव्यन्यायशास्त्रतत्त्वं प्रकाश्य महान्तमेवोपकारं कृतवानित्यत्र विमर्श एव न संभवति । अन्यथा नव्यन्यायं विनेदानीं कस्यापि दर्शनस्य शास्त्रस्य चाध्ययनाध्यापनादि वा किमपि भवितुं नाऽर्हतीति मन्यते । दीधितिकृतो महामहोपाध्याय-

रघुनाथशिरोमणेर्महामहोपाध्यायगदाधरभट्टाचार्यस्य च परिचयो विस्तृतिभयान्नेदानीं प्रकाश्यते, तदानीं तादृशः पण्डितो भारतवर्षे नाऽऽसीदित्येवास्माभिर्विज्ञायते ।

इयं प्रामाण्यवाददीपिका गदाधरकृतां प्रामाण्यवादग्रन्थव्याख्यामवलम्ब्यैव मया विनिर्मिता सर्वशः सर्वेषामुपकाराय भवति चेत् कृतकृत्योऽहं भविष्यामि । अविदितनव्यन्यायशास्त्रतत्त्वास्तावदेवं किल जनाः कथयन्ति यन्न्यायशास्त्रमशास्त्रमकिञ्चित्करमनेककुतर्कपटलप्रपूरितं निरर्थकतया नाऽध्येतव्यं प्रेक्षावद्भिरिति, तदवधारयन्तः सर्व एव धूर्तप्रवञ्चकप्रलापकलापतामसविवशीकृतमानसाकाशे विमलसुधाकरनिकररूपं नालोकयन्ति न्यायशास्त्रम् । मन्यते तावन्न्यायशास्त्राध्ययनविरहप्रवाह एवाऽस्मानुन्नतिपथकण्टकतया प्रतिपदं निरन्तरमाकुलीकरोति । तदिदानीं बुद्धिमन्तः श्रीमन्तः सर्वशास्त्रार्थतत्त्वप्रकाशकन्यायशास्त्राध्ययनप्रवृत्ता विपक्षपक्षं समूलं विनाशयन्तः सर्वथा सुविमलयशसो भवन्तु भवन्त इति ।

वामाचरणतोऽधीत्य वामाचरणशर्मणा ।
प्रामाण्यवादग्रन्थस्य तत्त्वमत्र प्रकाश्यते ॥ १ ॥
बाणर्तुवसुचन्द्रेऽसौ शाके पौषसिताष्टमी ।
प्राप्य समाप्तिमायाति 'दीपिका' नाम पुस्तिका ॥ २ ॥

३२।१७१ नं०, देवनाथपुरा,
काशीधाम । ३।१।४४ ई०

इति विज्ञापयति—
श्रीग्रन्थकारः ।

* नमः श्रीगणेशाय *

# प्रामाण्यवाददीपिका

कामं दहन्तमपि कामदमादिदेवं, स्वीयप्रियाविहितचेतनतं विभातम् ।
कान्तं कृतान्तभयमप्यनिशं हरन्तं, शान्तं शिवं शिवदमेकमहं स्मरामि ॥१॥

न्यायविद्याम्बुधेरन्तं गच्छन्तं विगतं गुरुम् ।
पितरौ च समाराध्यौ वन्दे मन्दमतिः पुनः ॥ २ ॥
श्रीवामाचरणो धीरो निर्ममे कौमुदीमिव ।
तर्कान्धकारमग्नेभ्यः प्रामाण्यवाददीपिकाम् ॥ ३ ॥

—:*:—

**गिरमित्यादिदीधितिः** । तथा च गुरुवाक्याधीनशाब्दबोधजनितसंस्कारसहकृतत्वं मनसि संपाद्य महर्षिप्रभृतिपूर्वपूर्वनिबन्धकाराभ्युपगतार्थसमूहरूपसरोवरे अपसिद्धान्तजनितदुःखसन्तानसन्तापनिवृत्तिकारणीभूतान्तःप्रवेशरूपावगाहनं कृत्वा चिन्तामणिग्रन्थतत्त्वार्थान् भूयसः शिष्यान् बोधयतीति समुदितार्थः पर्यवसितः ।

प्रमाणतत्त्वमत्र विविच्यत एतावन्मात्रेणैवोपपत्तौ अथ जगदेवेत्याद्यभिधानस्य निरर्थकत्वं निराकरोति दीधितौ—**प्रेक्षावत्प्रवृत्तय इत्यादि** । प्रेक्षावतां=विशेषफलमनुद्दिश्याप्रवर्तमानानाम् । प्रवृत्तिफलकं हि इष्टसाधनत्वरूपप्रयोजनवत्ताज्ञानम्, अभिधेयसम्बन्धज्ञानञ्च । तच्च ग्रन्थप्रमाणतत्त्वयोः प्रतिपाद्यप्रतिपादकभावसम्बन्धप्रमाणतत्त्वयोर्ज्ञानम्, तत्र अभिधेयसम्बन्धज्ञानं प्रमाणतत्त्वमत्र विवि-

च्यत इत्यादिशब्दजन्यम् । प्रयोजनवत्ताज्ञानन्तु न तथा तद्वाचकपदाभावात् । अतस्तादृशप्रयोजनवत्ताज्ञानार्थमथेत्याद्यभिधानम् । अथेत्यादिना स्वकीयग्रन्थस्य फलवच्छास्त्रप्रकरणत्वं प्रदर्शितम् । तेन हेतुना च प्रयोजनवत्ताज्ञानम् । अतः असमासेन प्रयोजनवत्तामभिधेयसम्बन्धौ चाऽऽहेत्युक्तम् ।

अथाभिधेयसम्बन्धज्ञानमपि फलवच्छास्त्रस्येष्टसाधनत्वरूपप्रयोजनवत्ताज्ञानं प्रति प्रयोजकं, तथा च प्रयोजनवत्तामाहेत्यनेनैव अभिधेयसम्बन्धाभिधानस्यापि चरितार्थत्वसम्भवे तुल्यतया अभिधेयसम्बन्धाभिधानमयुक्तमिति चेन्न, सामान्यतो ग्रन्थस्येष्टसाधनताज्ञानविषयत्वमवगच्छतः शिष्यस्य अभिधेयसम्बन्धज्ञानं विना अयं ग्रन्थो ज्ञातो न वेत्याकारकसंशयो भवति, संशये च शास्त्रश्रवणे प्रवृत्ति र्न स्यात्, तादृशप्रवृत्तौ ग्रन्थधर्मिका ऽज्ञातत्त्वनिश्चयस्य प्रयोजकत्वात् । तादृशं निश्चयं प्रति चाभिधेयसम्बन्धज्ञानं स्वतन्त्रं प्रयोजकमिति निरुक्तनिश्चयोपयोगितया अभिधेयसम्बन्धाभिधानस्य सम्भवः ।

प्रयोजनवत्ताज्ञानं हि प्रयोजनवत्तानुमितिः । तज्ज्ञानजन्यज्ञानविषयत्वरूपफलवच्छास्त्रप्रकरणत्वज्ञानजन्यज्ञानविषयतात्मकं प्रयोजनवतान्वयि तृतीयार्थः । तथा च अयं प्रामाण्यवादग्रन्थः मोक्षरूपफलसाधनं मोक्षरूपफलसाधनीभूतन्यायशास्त्रप्रतिपादितसमुदायैकदेशार्थप्रतिपादकत्वात्, यथा न्यायशास्त्रीययत्किञ्चित्सूत्रम् । प्रथमसूत्रेण तत्वज्ञानान्निःश्रेयसाधिगम इत्यन्तसमुदायेन न्यायशास्त्रस्य मोक्षसाधनत्वावगतिः । निरुक्तन्यायशास्त्रस्यैकदेशार्थप्रमाणतत्त्वप्रतिपादके निरुक्तप्रामाण्यवादे मोक्षसाधनत्वमित्याशयः ।

वस्तुतः ग्रन्थोऽयं मोक्षसाधनं मोक्षसाधनीभूता या अर्थप्रतिपत्तिस्तज्जनकत्वात्, यथा न्यायशास्त्रीयप्रमाणादिसूत्रम् । निरुक्तप्रमाणतत्त्वाद्यर्थे तु न्यायशास्त्रप्रतिपादितसमुदायार्थान्तर्गतत्वाभिधानं यन्मोक्षसाधनीभूतार्थप्रतिपत्तिजनकं भवति तन्मोक्षसाधनं भवति, यथा प्रमाणप्रमेयादिसूत्रमित्याकारकसहचारज्ञानाधीनव्याप्तिग्रहार्थमित्यवधेयम् ।

जगदेवेत्यत्र जगत्पदं मिथ्याज्ञानजन्यवासनारूपसंसारित्वविशिष्टात्मसमूहपरम् । अन्यथा उद्धाररूपमोक्षेच्छाविषयत्वस्य जगदन्तर्गतघटादौ मुक्तात्मनि च बाधेन उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्याऽनुपपत्तिः स्यात् ।

अथ दुःखपङ्कनिमग्नत्वरूपजगत्पदार्थविशेषणेनैव घटादिवारण सम्भवे जगत्पदस्य संसारित्वविशिष्टात्मपरत्वाभिधानमसङ्गतमिति चेन्न, दुःखपङ्कनिमग्नत्वं हि नोद्धारेच्छाविषयत्वोद्देश्यतावच्छेदकतया जगत्पदार्थविशेषणम्, तथा सति उद्देश्यतावच्छेदकवाचकदुःखपङ्कनिमग्नपदस्य जगत्पदपूर्ववर्तिता स्याद्, अतः दुःखपङ्कनिमग्नत्वमुद्धारेच्छाविषयत्वप्रयोजकतया विधेयस्वरूपम् । अत एवोक्तं यतो जगत् दुःखपङ्कनिमग्नमत एवोद्धारेच्छाविषयीभूतमिति । तथा च घटादौ मुक्तात्मनि च दुःखपङ्कनिमग्नत्वरूपप्रयोजकबाधेन उद्धारेच्छाविषयत्वस्यापि बाधाज्जगत्पदस्य संसारित्वविशिष्टात्मसमूहपरताया आवश्यकत्वमित्यवधेयम् । अत्रैवकारस्तादृशात्मत्वव्यापकोद्धारेच्छाविषयत्वाऽन्वयबोधतात्पर्यग्राहकः, यथा सर्व एव शुभकाल इत्यादावेवकारः ।

ननु निरुक्तजगदन्तर्गतशूद्रात्मानमुद्दिश्य भगवतो गौतमस्य शास्त्रप्रणयने प्रत्यवायः स्यादिति चेन्न, शूद्रत्वजात्यवच्छिन्नशरीरविशेषितात्मानमुद्दिश्य न महर्षेः शास्त्रप्रणयनम्, अपि तु अधिकारिब्राह्मणत्वादिजात्यवच्छिन्नशरीरविशेषिताकीटपतङ्गानामात्मानमुद्दिश्यैव तेन भगवता शास्त्रं प्रणीतमिति न तस्य प्रत्यवायः अनधिकारिशूद्रत्वजात्याक्रान्तशरीरविशेषितात्मानमुद्दिश्य शास्त्रप्रणयनस्यैव प्रत्यवायहेतुत्वात्।

**ननु प्रमाणादीनामितिमूलम्।** शून्यवादिमाध्यमिकानामियमाशङ्का, तथाहि प्रमाणतत्त्वनिरूपणमेव न सम्भवति प्रमाकरणत्वरूपप्रमाणतत्त्वनिरूपणघटकप्रमाणतत्त्वनिश्चयं प्रति विशेषणज्ञानविधया प्रमात्वनिश्चयस्य हेतुतया तस्यैव दुर्घटत्वात् प्रमात्वस्य स्वतो ग्राह्यत्वपरतोग्राह्यत्वयोर्वक्ष्यमाणदोषेण दूषितत्वात्। तदुपरि तटस्थस्य अथेत्याद्याशङ्का प्रामाण्यनिश्चयस्य किं प्रयोजनं प्रवृत्तिमात्रे तस्य व्यभिचारादित्याकारिका। सा तु न संगच्छते माध्यमिकपूर्वपक्षे प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वेनानभिधानात् तद्धेतुत्वखण्डनस्यार्थान्तरग्रस्तत्वात्। अतो बौद्धपूर्वपक्षेऽपि प्रामाण्यनिश्चयस्य प्रवृत्तिजनकत्वेनाशङ्कने प्रदर्शयितुमाह दीधितौ-**प्रामाण्यनिश्चायनेनेत्यादि मोक्षार्थिनं प्रवर्त्तयत् शास्त्रमित्यादि।** तथा च तत्त्वज्ञानान्निःश्रयेसाधिगम इत्यन्तप्रथमसूत्रेण प्रमाणतत्त्वज्ञाने मोक्षसाधनत्वज्ञानं शास्त्रजन्यं तादृशमोक्षसाधनताज्ञाने तु प्रमात्वनिश्चयः परम्परया मोक्षार्थिप्रवृत्तिजनकः, तादृशप्रामाण्यनिश्चयश्च न स्वतो न परत इत्यादिबौद्धपूर्वपक्ष इत्यभिप्रायः।

यथा श्रुतदीधितिग्रन्थस्तु न घटते शास्त्रजन्यतत्त्वज्ञानधार्मिक-मोक्षसाधनताज्ञाने प्रमात्वनिश्चयस्य शास्त्राजन्यत्वात् । कथञ्चित्तज्ज-न्यत्वस्वीकारे प्रमात्वस्य शास्त्ररूपपरतो ग्राह्यतया स्वतो वा परतो वेति विचारानवकाशप्रसङ्गः स्यादित्यभिमन्वान इत्युक्तं दीधिति-कृता । अत्राभिमानस्तु न दुर्घटः मूलोक्तपरम्परयेत्यनेन शास्त्राधीन-मोक्षसाधनताज्ञाने प्रामाण्यनिश्चयं सम्पाद्य शास्त्रे मोक्षार्थिनं प्रवर्त्तय-तीत्यर्थकरणेन सामञ्जस्यात् । साक्षाच्छब्दलभ्यार्थं गृहीत्वा आक्षे-पसङ्गतिसम्भवादभिमान इत्युक्तम् ।

तटस्थशङ्कां निराकर्त्तुं प्रवृत्तौ प्रामाण्यनिश्चयस्य जनकत्वं स्थापयितुं पुनर्माध्यमिकः शङ्कते—नचेति । अत्र यद्व्यतिरेकज्ञान-सामान्यस्य प्रतिबन्धकताऽग्रे दीधितिकृतावक्ष्यते । यद्व्यतिरेकज्ञान-सामान्यलाभस्तु यावद्व्यतिरेकज्ञानलाभमन्तरेण न सम्भवति । एवञ्च यथाश्रुतयत्संशयानात्मकधूमो वह्निव्याप्त्यभाववान् न वा, धूमो वह्निव्याप्त्यभाववद्भिन्नो न वेत्याकारकव्यतिरेकज्ञानस्यालाभात्कुतः सामान्यलाभः । यदि च यत्संशयपदेन यन्निष्ठप्रकारताकसंशय इति विवक्ष्यते निरुक्तसंशययोरपि व्याप्त्यभावाभावरूपव्याप्तिप्रकारताक-त्वेन व्याप्त्यभाववद्भेदरूपव्याप्तिप्रकारकत्वेन च यत्संशयपदेन धर्त्तुं शक्यते तदा प्रमेयत्वेन व्याप्त्यवगाहिधूमः प्रमेयवान् न वेत्याकारकसंशयस्यापि व्याप्तिनिष्ठप्रकारताकयावत्संशयान्तर्गततया तन्निष्ठप्रतिबन्धकताकत्वस्य अनुमितावसत्त्वेन दृष्टान्तासिद्धिः स्यात्, अतो यद्रूपावच्छिन्नप्रकारताकसंशयनिष्ठप्रतिबन्धकताकत्वे सति यद्रूपावच्छिन्नप्रतियोगिताकाभावनिश्चयनिष्ठप्रतिबन्धकताकत्वस्य

हेतुत्वं विवक्षणीयम् । एवञ्च धूमो व्याप्त्यभाववान् न वेत्यादिसंशयस्य व्याप्त्यभावाभावत्वेन व्याप्तिप्रकारकस्य व्याप्तित्वरूपयद्रूपावच्छिन्नसंशयपदेन धर्त्तुमशक्यतया यावद्यद्व्यतिरेकज्ञानलाभासम्भवात्तल्लाभार्थं व्यतिरेकपदं व्यत्यस्याह दीधितिकारः—**यद्व्यतिरेकसंशयनिश्चयाविति** । तथा चैतन्मते इदानीं यद्रूपावच्छिन्नप्रतियोगिताकाभावस्य संशयनिश्चयौ यत्र प्रतिबन्धकावित्यर्थः पर्यवसितः ।

केचित्तु यस्य संशयव्यतिरेकनिश्चयावित्यादियथाश्रुतमूले यत्पदोत्तरषष्ठ्या द्विविधोऽर्थः कर्तव्यः, एकश्च संशयान्वयी विषयतारूपः, अपरश्च व्यतिरेकान्वयी प्रतियोगितारूपः । अतोऽर्थद्वयकल्पनां परित्यज्य एक एव प्रतियोगितारूपः षष्ठ्यर्थो व्यतिरेकान्वयी कल्पनीय इत्याशयेन व्यतिरेकपदव्यत्यासः । अथ घटस्य संशय इत्यत्रैकधर्मिका भावावगाहिज्ञानरूपसंशयपदार्थैकदेशेऽभावे घटपदोत्तरषष्ठ्यर्थप्रतियोगिताया अन्वयः । अपरस्य संशयपदार्थे ज्ञाने विषयत्वरूपषष्ठ्यर्थस्यान्वयः, तथा च संशयपदसमभिव्याहृतषष्ठ्या अर्थद्वयकल्पनासर्वत्रैवास्तीति कथं तत्कल्पनाभयेन व्यतिरेकपदव्यत्यासः इति चेन्न, घटस्य संशय इत्यादौ संशयत्वं हि नैकधर्मिकाभावप्रकारकज्ञानत्वमपि तु विषयिताविशिष्टविषयिताशालिज्ञानत्वमेव तत्, विषयितावैशिष्ट्यं विषयितायां स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व स्वसामानाधिकरण्योभयसम्बन्धेन । आहार्यज्ञानवारणाय प्रथमसम्बन्धनिवेशः । घटवान् घटाभाववानित्याकारकज्ञानद्वयस्य संशयत्वापत्तिवारणाय द्वितीयसम्बन्धनिवेशः । घटस्यसंशय इत्यत्र विषयिताविशिष्टविषयितावज्ज्ञानात्मकसंशयपदार्थ-

तावच्छेदकीभूतायां विषयिताविशिष्टविषयितायां षष्ठ्यर्थनिरूपितत्व-स्यान्वयो न तु प्रथमविषयितायां तस्यान्वयः, असति प्रतिबन्धके पदार्थतावच्छेदकेऽन्वयसम्भवे पदार्थतावच्छेदकतावच्छेदकेऽन्वय-स्याव्युत्पन्नत्वात्। अतएवोक्तं चरमविषयितायामिति। नवा षष्ठ्यर्थो निरूपकत्वं घटस्य संशयो न पटस्येत्यादो पटनिष्ठनिरूपकताया निरू-पितत्वसम्बन्धेनाभावबोधासम्भवात् निरूपितत्वस्य वृत्त्यनियामकत्वात्, अतोनिरूपितत्वमेवषष्ठ्यर्थः। अतएवोक्तं निरूपकत्वं निरूप्यत्वं वेति।

**अत्र संशयादिपदमिति।** तथा च यद्रूपावच्छिन्ननिश्चय-विशिष्टसंशयत्वव्यापिका सती तादृशनिश्चयविशिष्टनिश्चयत्वव्यापिका या प्रतिबन्धकता तन्निरूपितप्रतिबध्यतावद् यद् भवति तत् तद्रूपा-वच्छिन्ननिश्चयजन्यं भवतीत्येवं व्याप्तिः संशयनिश्चयपदसत्त्वे आदर-णीया। तादृशनिश्चयवैशिष्ट्यं संशये निश्चये च स्वप्रतिबध्यतावच्छे-दकधर्मितावच्छेदककत्वस्वप्रकारतावच्छेदकरूपावच्छिन्नप्रतियोगिता-काभावप्रकारकत्वोभयसम्बन्धेन। प्रथमसंबन्धानिवेशे प्रमेयत्वेन धूमावगाहिव्याप्त्यभावसंशयादेरपि यावत्संशयान्तर्गततया तत्रानु-मितिप्रतिबन्धकत्वविरहेण दृष्टान्तासिद्ध्याद्यापत्तिः, द्वितीयसम्बन्धा-निवेशे धूमधर्मिकद्रव्यत्वसंशयस्यापि यावत्संशयान्तर्गततया तत्रानु-मितिप्रतिबन्धकत्वविरहेण दृष्टान्तासिद्ध्याद्यापत्तिरतस्तत्सम्बन्धनिवेश इति भावः।

यत्तु स्वप्रतिबध्यसमानधर्मितावच्छेदककत्वं संशयनिश्चयादौ निवेश्यं, स्वपदं साध्यीभूतनिश्चयपरं, धर्मितावच्छेदकनिवेशव्यावृत्तिः पूर्ववदितिमतं तत्तुच्छं स्वपदेन साध्यीभूतनिश्चयमुपादाय तत्प्रति-

वध्यसंशयप्रतिबन्धकताकत्वस्य स्वातिरिक्त उपपादनस्य ग्रन्थकारीयरीतिविरुद्धत्वात् । व्याप्तिनिश्चयप्रतिवध्यव्यभिचारसंशयात्मकसमूहालम्बनघटादिधर्मिकद्रव्यत्वनिश्चयधर्मितावच्छेदककस्य घटो वह्निव्याप्यो न वेत्याकारकसंशयस्यापि यावत्संशयान्तर्गततया तत्प्रतिवध्यत्वस्यानुमितौ विरहेण दृष्टान्तासिद्ध्यापत्तेश्चेति धेयम् ।

एवञ्च पूर्वोक्तायां व्याप्तौ यद्रूपावच्छिन्ननिश्चयविशिष्टज्ञानत्वव्यापकप्रतिबन्धकतामात्रनिवेशेनैवोपपत्तौ संशयपदं निश्चयत्व घटकतदभावाप्रकारकत्व दलमपि व्यर्थमत आह दीधितौ—**यद्व्यतिरेकज्ञानत्वेनेति** । वस्तुतः संशयादिपदोपादाने गौरवमेव स्यान्नतु तत्पदोपादानस्य व्यर्थता तादृशसंशयनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावात् तादृशज्ञाननिष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्य भिन्नतयाऽखण्डाभावघटकतयैव तत्पदोपादानसार्थक्यसम्भवात् ।

व्यतिरेकज्ञानत्वेनेत्यत्र तृतीयार्थः अनतिरिक्तवृत्तित्व रूपावच्छेदकत्वं, तथा च तादृशव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतेत्यादिरीत्या निवेश इति भावः । न च यद्व्यतिरेकज्ञानत्वनिष्ठस्वरूपसम्बन्धरूपावच्छेदकताकप्रतिबन्धकतेत्यादिरीत्यैव निवेशः क्रियतामितिवाच्यं, तथा सति घटवद्भूतलमित्यादिज्ञाने व्यभिचारापत्तेः तज्ज्ञानं प्रति घटाभावनिश्चयस्य घटाप्रकारकत्वविशिष्टघटाभावप्रकारकज्ञानत्वरूपनिश्चयत्वेन प्रतिबन्धकतया घटाभावज्ञानत्वस्यापि प्रतिबन्धकतावच्छेदकत्वेन तादृशज्ञानत्व निष्ठावच्छेदकताकप्रतिबन्धकतानिरूपितप्रतिवध्यतावत्त्वस्य घटवद्भूतलमितिज्ञाने सत्त्वेन तत्र घटनिश्चयजन्यत्वविरहात् ।

यदि च यद्व्यतिरेकज्ञानत्ववृत्तिप्रतिबन्धकताकं यदित्यादिरीत्या निवेशे न तत्र व्यभिचारः, वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगितावत्त्वसम्बन्धेन। एतादृशं स्वं न घटज्ञाननिरूपितप्रतिबन्धकत्वं तदवच्छेदकतापर्याप्त्यनुयोगितावच्छेदकघटप्रकारकत्वविशिष्टघटाभावप्रकारकज्ञानत्वगतद्वित्वरूपसङ्ख्यावच्छिन्नानुयोगितायाः केवलघटाभावप्रकारकज्ञानत्वे विरहाद्, हेत्वभावेन साध्यासत्त्वेऽपि क्षत्यभावात्। एतादृशं च स्वम् अनुमितिप्रतिप्रतिबन्धकव्याप्त्यभावसंशयादिनिष्ठं प्रतिबन्धकत्वं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगितकपर्याप्त्यनुयोगितावच्छेदकव्याप्त्यभावज्ञानत्वगतसङ्ख्यावच्छिन्नानुयोगिताया व्याप्त्यभावज्ञानत्वे सत्त्वादित्युच्यते तदा निरुक्तरीत्या पर्याप्तिनिवेशेन गौरवाल्लाघवाद्व्यतिरेकज्ञानत्वव्यापकत्वनिवेश एव श्रेयानिति भावः।

एवञ्च यद्रूपावच्छिन्नाभावप्रकारकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिवध्यतावद्यद्भवति तत् तद्रूपावच्छिन्ननिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद्भवतीति सामान्यव्याप्तिः। व्याप्तित्वावच्छिन्नप्रतियोगिताकाभावज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिवध्यताया अनुमितौ सत्त्वेन तत्र व्याप्तित्वावच्छिन्ननिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यताया अपि सत्त्वान्न दृष्टान्तासिद्ध्यादिकम्। प्रमात्वत्वावच्छिन्नाभावज्ञानत्वव्यापकप्रतिबन्धकता निरूपितप्रतिवध्यत्वस्य प्रवृत्तावुभयवादिसिद्धतया तेन हेतुना प्रमात्वनिश्चयजन्यत्वस्य तत्र सिद्धिः। व्यापकत्वानिवेशे घटज्ञाने व्यभिचारः घटाभावनिश्चयात्मकसमूहालम्बनव्याप्तिव्यतिरेकसंशयादिनिष्ठप्रतिबन्धकतानिरूपितप्रतिव -

ध्यताया घटज्ञाने सत्त्वेन तत्र व्याप्तिनिश्चयजन्यत्वस्य विरहात् । व्यापकत्वनिवेशे तु न तत्र व्यभिचारः असमूहालम्बनात्मककेवल-व्याप्त्यभावसंशये घटज्ञानप्रतिबन्धकताया विरहात् । अनयैव दिशा पूर्वत्र संशयादिसामान्यपरमित्यत्रापि सामान्यपदव्यावृत्तिरवसेया ।

यथाश्रुतप्रतिबन्धकत्वस्य यद्व्यतिरेकज्ञाने तन्निश्चयजन्यत्वञ्च प्रवृत्ताविति साध्यसाधनयोः सामानाधिकरण्यासम्भवाद् यद्व्यतिरेक-ज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वतन्निश्चयजन्यत्वयोर्हे-तुत्वसाध्यत्वाभ्यामुपन्यासः । भागवतं यद्व्यतिरेकनिश्चयमादाय-सिद्धसाधनवारणार्थं निश्चयत्वावच्छिन्नजनकतानिवेशः । कार्यमात्रं प्रति भागवतज्ञानस्य न निश्चयत्वेन हेतुताऽपितूपादानप्रत्यक्षत्वेनेति न सिद्धसाधनावसरः । न च माध्यमिकेनेश्वरानभ्युपगमात्कथं 'न चे'त्यादिशङ्कितुस्तस्य मते सिद्धसाधनमिति वाच्यम्, तटस्थेनार्था-न्तरोद्भावनसम्भवात् । न च तथापि न चेत्यादिशङ्कितुर्माध्यमिकस्य मते प्रामाण्यनिश्चयस्य स्वतः परतो वाऽसम्भवात्कथं प्रामाण्यनिश्चय-जन्यत्वं प्रवृत्तौ तेनैव साधनीयमिति वाच्यं, नैयायिकमतमवलम्ब्य नैयायिकं पराभवितुं प्रामाण्यनिश्चयजन्यत्वस्य सिद्धिसम्भवात् ।

ननु अव्यभिचारस्य व्यतिरेकोऽव्यभिचाराभावः, स च व्यभि-चारस्वरूप स्तद्विषयके संशये तद्विषयके निश्चये च व्याप्तिज्ञान-प्रतिबन्धकतायाः सत्त्वेन यत्पदेनाव्यभिचारमुपादाय तद्व्यतिरेकज्ञान-त्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावति व्याप्तिज्ञानेऽव्यभिचार निश्चयजन्यत्वरूपसाध्यविरहेण व्यभिचार अत आह—**ग्राह्यशयसं-स्येति । अप्रतिबन्धकतेति ।** तथा च तद्वत्ताबुद्धौ तदभावावगा-

हितावच्छिन्निश्चयत्वेन प्रतिबन्धकत्वं न तु तादृशज्ञानत्वेनेति व्यभिचाराख्याव्यभिचारव्यतिरेकसंशयस्य व्याप्तिग्रहप्रतिबन्धकत्वाभावेनाव्यभिचारव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वरूपहेतोरेव व्याप्तिज्ञाने विरहान्न तत्र व्यभिचारः ।

मिश्रास्तु व्यभिचारसंशयस्यापि मणिमन्त्रादिन्यायेन व्याप्तिग्रहप्रतिबन्धकत्वमङ्गीकुर्वन्ति तन्मते यथाश्रुत एव मूलग्रन्थः । तथाहि यत्संशयत्वव्यापिका सती यद्व्यतिरेकनिश्चयत्वव्यापिका या प्रतिबन्धकता तन्निरूपितप्रतिबध्यतावद् यद्भवति तत् तन्निश्चयत्वावच्छिन्नजन्यं भवतीति व्याप्तिः । न चैवं व्याप्तिनिश्चये व्यभिचारः अव्यभिचारसंशयप्रतिबध्यत्वस्याव्यभिचारव्यतिरेकनिश्चयप्रतिबध्यत्वस्यापि तत्र सत्त्वेन तत्राव्यभिचारनिश्चयजन्यत्वविरहादिति वाच्यं, यद्भावत्वप्रकारतानियतत्वस्य यत्संशययद्व्यतिरेकनिश्चययोर्वैकल्पिकविशेषणत्वाभ्युपगमात् । तादृशनियतत्वञ्च स्वप्रतिबन्धकताव्यापकयद्भावत्वप्रकारकत्वम् । स्वं=प्रतिबध्यत्वेनाऽभिमतम् । तथा च स्वप्रतिबन्धकताव्यापकं यद्भावत्वप्रकारताकत्ववद् यत्संशयत्वव्यापिका सती यद्व्यतिरेकनिश्चयत्वव्यापिका या प्रतिबन्धकता तन्निरूपितप्रतिबध्यतावद् यद् यत्स्वं तत् तन्निश्चयजन्यमिति व्याप्तिः । निश्चये यद्भावत्वप्रकारतानियतत्वनिवेशपक्षे तु संशये तादृशनिवेशनं परित्यज्य निरुक्तयैव रीत्या व्याप्तिः करणीया । एवञ्च निरुक्तं स्वं न व्याप्तिनिश्चयः व्याप्तिनिश्चयप्रतिबन्धकताया व्यभिचारत्वेन व्यभिचारावगाहिसंशयेऽपि सत्त्वेन तत्राऽव्यभिचाराभावत्वप्रकारताकत्वासत्त्वाद् यत्पदेनाव्यभिचारस्य धर्त्तुमशक्यत्वात् ।

अथ प्रमेयत्वेन व्याप्त्यभावावगाहिनि धूमादौ पक्षवृत्तित्वाभावविषयकज्ञाने 'प्रमेयवान् धूमः पर्वतवृत्तित्वाभाववानि'त्याकारकेऽनुमितिप्रतिबन्धकतायाः सत्त्वात्तत्र व्याप्त्यभावत्वप्रकारकत्वाभावेनानुमितिप्रतिबन्धकताव्यापकव्याप्त्यभावत्त्वप्रकारताकत्त्वस्य व्याप्त्याद्दिसंशयादौ विरहाद् यत्पदेन व्याप्तेर्धर्त्तुमशक्यतयाऽनुमितौ दृष्टान्तासिद्धिः स्यादतस्तद्वारणाय यदभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताव्यापकयदभावत्वप्रकारताकत्वमेव यदभावत्वप्रकारतानियतत्वरूपं यत्संशयादौ विशेषणं वाच्यम्। एवञ्च न दृष्टान्तासिद्धिः व्याप्त्यभावावगाहिताप्रयुक्तप्रतिबन्धकतायाः 'प्रमेयवान् धूमः पर्व्वत वृत्तित्वाभाववानि'त्याकारकज्ञाने विरहात्तज्ज्ञानस्य पक्षवृत्तित्वाभावावगाहिताप्रयुक्तानुमितिप्रतिबन्धकतावत्त्वात्। तथा च व्याप्त्यभावावगाहिताप्रयुक्तानुमितिप्रतिबन्धकतावर्ति व्याप्त्यभावत्त्वेन व्याप्तिसंशयादौ व्याप्त्यभावप्रकारताकत्वस्य सत्त्वाद् यदभावत्वप्रकारतानियतयत्संशयपदेन व्याप्तिसंशयस्य धर्त्तुं शक्यत्वान्निरुक्तरीत्या दृष्टान्तासिद्धिवारणे पक्षधरमिश्राणां यद्व्यतिरेकपदोपानमनर्थकं स्यात्तदुपादानं तु व्यभिचारसंशयप्रतिबध्ये व्याप्तिज्ञाने व्यभिचारनिश्चयाजन्ये व्यभिचारवारणार्थं, तत्तु न सङ्गच्छते व्यभिचाराभावावगाहिताप्रयुक्तव्याप्तिनिश्चयप्रतिबन्धकताया व्यभिचारसंशये विरहात् तत एव यत्पदेन व्यभिचारस्य धर्त्तुमशक्यतया यद्व्यतिरेकनिश्चयपदोपादानस्य वैयर्थ्यापातसम्भव इति चेन्न, व्यतिरेकनिश्चये यथोक्तयदभावत्वप्रकारतानियतत्वविशेषणानिवेशपक्षे यदभावावगाहिताप्रयुक्तत्वं प्रतिबन्धकतायां विशेषणं न तु संशये तन्निवेशपक्षे देयम्, एवञ्च व्यतिरेक-

निश्चयपदासत्त्वे संशय एव यदभावत्वप्रकारतानियतत्वविशेषणमस्तीति सूचितमिति चेत्,

स्वाप्रतिबन्धकताव्यापकयदभावप्रकारताकत्वमात्रं संशयविशेषणं तच्चाऽनुमितिप्रतिबन्धकतावति व्याप्तिनिश्चयप्रतिबन्धकतावति च व्यभिचारसंशये वर्तत इति यत्संशयपदेन व्यभिचारसंशयमादायानुमितौ व्याप्तिनिश्चये च व्यभिचारवारणाय यद्व्यतिरेकनिश्चयपदोपादानस्य सार्थक्यसम्भवात्। तदुपादाने तु न तत्र व्यभिचारः व्यभिचारव्यतिरेकनिश्चयस्याऽनुमित्यादावप्रतिबन्धकत्वात्। यत्संशयपदानुपादाने घटाभावनिश्चयप्रतिबध्ये घटज्ञाने घटनिश्चयाजन्ये व्यभिचारः। तदुपादाने तु घटसंशयस्य घटज्ञानाप्रतिबन्धकत्वान्न तत्र व्यभिचारः। संशये यदभावत्वप्रकारतानियतत्वनिवेशपक्षे प्रतिबन्धकतायां यत्संशयत्वव्यापकत्वानुपादाने यादृशस्थलविशेषे घटाभाववानित्याकारकनिश्चयो नियमतो व्याप्तिसंशयात्मकसमूहालम्बनरूप एव भवति, व्याप्तिसंशयस्तु पृथगपि भवति, तादृशस्थले घटज्ञाने व्यभिचारः व्याप्त्यभावत्वप्रकारतानियतव्याप्तिसंशयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वस्य घटज्ञाने सत्त्वेन तत्र व्याप्तिनिश्चयजन्यत्वविरहात्। व्यापकत्वनिवेशे तु न तत्र व्यभिचारः पृथग्भूते व्याप्तिसंशये घटज्ञानप्रतिबन्धकताया विरहेण व्याप्तिसंशयप्रतिबन्धकताकत्वस्य तत्राऽसत्त्वात्। व्यतिरेकनिश्चये यदभावत्वप्रकारतानियतत्वनिवेशपक्षे यदभावाऽवगाहिताप्रयुक्तस्वप्रतिबन्धकताऽव्यापकयदभावत्वप्रकारताकत्वस्यैव तादृशनियतत्वस्वरूपतया निरुक्तनिश्चयत्वव्यापकत्वनिवेशऽव्यावृत्त्यसम्भवे तद्व्यावृत्तिदानं सुधीभिश्चिन्तनीयम्।

वस्तुतो व्याप्त्यभाववान् घटाभाववान् व्याप्त्यभाववांश्चाऽयमित्याकारकनिश्चयविशिष्टनिश्चयीयव्याप्त्यभावविषयिताया अपि घटज्ञानप्रतिबन्धकतावच्छेदकतया तत्प्रयुक्तप्रतिबन्धकताकत्वस्य घटज्ञाने सत्त्वेन तत्र व्याप्तिनिश्चयजन्यत्वविरहाद् घटज्ञाने व्यभिचारवारणाय यद्व्यतिरेकनिश्चयत्वव्यापकत्वं प्रतिबन्धकतायां विवक्षणीयम्। इदमपि घटाभावनिश्चययात्मक एव तादृशनिश्चयविशिष्टव्याप्तिव्यतिरेकनिश्चयः समूहालम्बनरूपो भवति तदैव व्यभिचारसम्भव इति ध्येयम्।

निरुक्तरीत्या नैयत्यविवक्षणे गौरवमाशङ्क्याह—**यदभाव-त्वेति**। तथा च यदभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तप्रतिबन्धकताकं यद् यत तद्व्यक्तित्वावच्छिन्नकूटवत्त्वे सता यत्संयत्वव्यापिका सती यद्व्यतिरेकनिश्चयत्वव्यापिका या प्रतिबन्धकता तन्निरूपितप्रतिबध्यतावद् यत्तत् तन्निश्चयत्वाऽवच्छिन्नजन्यमितिसामान्यव्याप्तिः। व्याप्त्यभावत्वप्रकारकतद्व्यक्तित्वेन् व्याप्त्यभावप्रकारकज्ञाननिष्ठव्याप्त्यभावावगाहिताप्रयुक्तप्रतिबन्धकताकं यत्तादृशतद्व्यक्त्यभाववानित्याकारकं ज्ञानं तद्भिन्नत्वस्याऽनुमितौ सत्त्वेन सत्यन्तदलस्य व्याप्तिसंशयव्याप्तिव्यतिरेकनिश्चयत्वव्यापकप्रतिबन्धकताकत्वस्य च तत्र सत्त्वेन विशेष्यदलस्य च सत्त्वान्न दृष्टान्तासिद्धिः एवं प्रमात्वाभावत्वाप्रकारकप्रमात्वाभावव्यक्तित्वावच्छिन्नप्रकारकज्ञाननिष्ठप्रमात्वाभावविषयिताप्रयुक्तप्रतिबन्धकताकं यत्प्रमात्वाभाव व्यक्तित्वावच्छिन्नाभावज्ञानं तदन्यत्वस्य प्रवृत्तौ सत्त्वेन प्रवृत्तेः सत्यन्तदलाक्रान्तत्वात्प्रमात्वसंशयप्रमात्वव्यतिरेकनिश्चयप्रतिबन्धकताक—

त्वस्य तत्र सत्त्वेन विशेष्यदलाक्रान्तत्वाच्च न स्वरूपासिद्धिः।

संशयत्वादिव्यापकत्वानिवेशे घटज्ञाने व्यभिचारः समूहालम्बन-घटाभावनिश्चयात्मकव्याप्तिसंशयादिनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताया घटज्ञाने सत्त्वेन विशेष्यदलस्य व्याप्त्यभावत्वाप्रकारकव्याप्त्यभावव्यक्तित्वावच्छिन्नप्रकारकव्याप्त्यभावावगाहिताप्रयुक्तज्ञाननिष्ठप्रतिबन्धकताकं यद्व्याप्त्यभावव्यक्तित्वावच्छिन्नाभावज्ञानं तदन्यत्वस्यापि घटज्ञाने सत्त्वेन सत्यन्तदलस्य तत्र सत्त्वात्तत्र व्याप्तिनिश्चयजन्यत्वविरहात्। व्यापकत्वनिवेशे तु असमूहालम्बनात्मकव्याप्तिसंशयादौ घटज्ञानप्रतिबन्धकताविरहेण न तत्र व्यभिचार इति भावः।

अत्र यदभावावगाहितामात्रप्रयुक्तप्रतिबन्धकताकान्यत्वस्य सत्यन्तार्थत्वे यदभावत्वाप्रकारकज्ञाननिष्ठत्वस्य तादृशावगाहितायामविशेषणत्वे दृष्टान्तासिद्धिः, व्याप्त्यभावत्त्वेन व्याप्त्यभावावगाहिज्ञानीयव्याप्त्यभावावगाहिताप्रयुक्तप्रतिबन्धकताकत्वस्याऽनुमितौ सत्त्वेन तस्याः सत्यन्तदलानाक्रान्ततया यत्पदेन व्याप्तेर्धर्त्तुमशक्यत्वाद्। एवं यदभावत्वाप्रकारकज्ञाननिष्ठप्रतिबन्धकताकान्यत्वमात्रनिवेशे यदभावावगाहिताप्रयुक्तत्वानिवेशे पुनर्दृष्टान्तासिद्धिः व्याप्त्यभावत्वाप्रकारकप्रमेयत्वेन व्याप्त्यभावावगाहि 'प्रमेयवान् धूमः पर्व्वतावृत्तिरि'-त्याकारकज्ञाननिष्ठप्रतिबन्धकताकत्त्वस्यानुमितौ सत्त्वेन तस्याः सत्यन्तदलानाक्रान्ततया यत्पदेन व्याप्तेर्धर्त्तुमशक्यत्वात्। न च यदभावत्वप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तप्रतिबन्धकताकत्वमेव सत्यन्तमस्तु किं नञ्द्वयप्रवेशेनेति वाच्यम्, यत्पदेनाव्यभिचारमादाय व्याप्तिनिश्चये व्यभिचारापत्तेः, अव्यभिचाराभावत्वप्रकारकाव्यभिचारा-

भावत्त्वेनाऽव्यभिचाराभावावगाहिज्ञाननिष्ठाव्यभिचाराभावविषयिताप्रयु-क्तप्रतिबन्धकताकत्त्वस्य व्याप्तिनिश्चये सत्त्वेन सत्त्यन्तदलस्याव्यभिचा-रसंशयाव्यभिचारव्यतिरेकनिश्चयप्रतिबन्धकताकत्वस्य च सत्त्वेन विशे-ष्यदलस्यापि सत्त्वाचत्राव्यभिचारनिश्चयजन्यत्वविरहात्। नञ्द्वयोपादाने तु न व्याप्तिनिश्चये व्यभिचारः अव्यभिचाराभावत्वाप्रकारकं यद्व्य-भिचारत्वेन व्यभिचारज्ञानं तदीयाव्यभिचाराभावविषयिताप्रयुक्तप्रति-बन्धकताकत्त्वस्य च तत्र सत्त्वेन तदन्यत्वस्य व्याप्तिनिश्चये विरहाद् व्याप्तिनिश्चयस्य सत्त्यन्तदलनाक्रान्तत्वात्।

एवञ्चेद् व्यतिरेकपदोपादानव्यावृत्तिरपि साधु सङ्गच्छते तद-नुपादाने यत्पदेन व्यभिचारमादाय व्याप्तिनिश्चये व्यभिचारापत्तिः व्यभिचाराभावत्वाप्रकारकतद्व्यक्तित्वेन व्यभिचाराभावावगाहिज्ञाननि-ष्ठप्रतिबन्धकताकं यत्तादृशतद्व्यक्त्यभाववानित्याकारकं ज्ञानं तदन्य-त्वस्य व्याप्तिव्यभिचारसंशयत्वव्यापकप्रतिबन्धकताकत्त्वस्य च व्याप्ति-निश्चये सत्त्वेन तत्र व्यभिचारनिश्चयजन्यत्वविरहात्। तदुपादाने तु व्यभिचारव्यतिरेकनिश्चयात्मकव्यभिचाराभावनिश्चयस्य व्याप्तिबुद्धाव-प्रतिबन्धकत्त्वान्न तत्र व्यभिचारः।

भेदकूटघटितसत्यन्तर्थाविवक्षणेऽपि यत्पदेनाऽव्यभिचारमादाय व्याप्तिनिश्चय एव व्यभिचारः अव्यभिचाराभावत्वाप्रकारकतद्व्यक्ति-त्वेनाव्यभिचाराभावावगाहिज्ञानन्निष्ठाव्यभिचाराभावविषयिताप्रयुक्तप्र-तिबन्धकताकं यद् यत्किञ्चिदव्यभिचाराभावव्यक्त्यभाववानित्याका-रकं ज्ञानं तद्भिन्नत्वस्य व्याप्तिनिश्चये सत्त्वात्। भेदकूटनिवेशे तु यद् यद्व्यक्त्यन्तर्गताव्यभिचाराभावत्वाप्रकारकव्यभिचारत्वावच्छिन्नवि-

षयिताप्रयुक्तप्रतिबन्धकताकस्य व्याप्तिनिश्चयस्य व्याप्तिनिश्चये भेद-विरहात् सत्त्यन्तार्थाभावेन न व्यभिचारः ।

भेदकूटघटितसत्त्यन्तार्थविवक्षणे गौरवमसहिष्णुः कल्पान्तरमाह-**स्वप्रतिबन्धकताऽनवच्छेदकेति** । तथा च यदभावत्वानवच्छिन्न-यदभावविषयितात्त्वव्यापकस्वप्रतिबन्धकतावच्छेदकत्वाभावकत्त्वे सति यत्संशयत्वव्यापिका सती यद्व्यतिरेकनिश्चयत्वव्यापिका या प्रतिबन्ध-कता तन्निरूपितप्रतिबध्यतावद् यद् भवति तत् तन्निश्चयत्वावच्छि-न्नजन्यं भवतीति व्याप्तिरित्याशयः। अत्र व्यापकत्वार्थकतदभावविष-यितासामान्यपदानुक्तौ यत्पदेनाव्यभिचारमादाय व्याप्तिनिश्चये व्यभि-चारः अव्यभिचाराभावत्वाऽनवच्छिन्नतद्व्यक्तित्वेनाव्यभिचाराभावाऽव-गाहिज्ञानीयव्यभिचाराभावविषयितायां व्याप्तिनिश्चयप्रतिबन्धकतानव-च्छेदकत्वस्य सत्त्वेन स्वपदेन व्याप्तिनिश्चयस्य धर्तुं शक्यत्वात्तादृशय-दभावविषयितात्वव्यापकत्वस्य स्वप्रतिबन्धकतावच्छेदकत्वाभावे प्रवेशे तु न व्यभिचारः। अव्यभिचाराभावत्वानवच्छिन्नाव्यभिचाराभावविषयि-तासामान्यान्तर्गतायां व्यभिचारत्वावच्छिन्नविषयितायां व्याप्तिनिश्चय-प्रतिबन्धकतानवच्छेदकत्वविरहेण स्वपदेन व्याप्तिनिश्चयस्य धर्तुम-शक्यत्वात्। यदभावविषयितायां यदभावत्वानवच्छिन्नत्वाविवक्षणे दृष्टा-न्तासिद्धिः व्याप्त्यभावत्वेन व्याप्त्यभावविषयिताया अपि यदभाववि-षयितासामान्यान्तर्गततया तत्रानुमितिप्रतिबन्धकतानवच्छेदकत्व-विरहेण स्वपदेनानुमितेर्धर्तुमशक्यत्वात् । यदभावविषयितायां तदुपादाने न दृष्टान्तासिद्धिः । व्याप्त्यभावत्वानवच्छिन्नतद्व्यक्तित्वेन व्याप्त्यभावविषयिताया एव तादृशविषयितासामान्यान्तर्गततया तत्रा-

नुमितिप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वादनुमितेरेव स्वपदोपात्तत्वसम्भवात् ।

यदभावविषयितापर्यन्तमनिवेश्य यदभावत्वानवच्छिन्नविषयितामात्रनिवेशे पुनरपि दृष्टान्तासिद्धिः व्याप्त्यभावत्वानवच्छिन्नपक्षवृत्तित्वाभावादिविषयितायामनुमितिप्रतिबन्धकतानवच्छेदकत्वविहात् । तादृशयदभावविषयितापर्यन्तनिवेशे तु तद्व्यक्तित्वावच्छिन्नविषयिताया एव घर्त्तव्यतया न दृष्टान्तासिद्धिः । नचैवं यदभावत्वानवच्छिन्नयदभावविषयितात्वव्यापकस्वप्रतिबन्धकत्वाभावकत्वमात्रमेव निवेश्यतां किमवच्छेदकत्वानुसरणेनेति वाच्यं, दृष्टान्तासिद्ध्यापत्तेः, व्याप्त्यभावत्वानवच्छिन्नव्याप्त्यभावविषयितायास्तद्व्यक्तित्वेन व्याप्त्यभावविषयकपक्षवृत्तित्वाभावविषयकसमूहालम्बनज्ञानेऽपि सत्त्वेन तत्रानुमितिप्रतिबन्धकत्वाभावविरहेण स्वपदेनानुमितेर्धर्त्तुमशक्यत्वात् । तादृशावच्छेदकत्वाभावस्य तादृशविषयितात्वव्यापकत्वनिवेशे तु न दृष्टान्तासिद्धिस्तद्व्यक्तित्वेन तादृशव्याप्त्यभावविषयितायामनुमितिप्रतिबन्धकतानवच्छेदकत्वस्य सत्त्वात् । नञ्द्वयोपादानव्यावृत्तिः पूर्ववदित्यस्मदीयं दुर्गममिश्रमतव्याख्यानं **प्रवीणसुधीभिर्विवेचनीयम्** ।

दीधितिकृता तु यथा घटसंशयस्य ग्राह्यसंशयत्वेन न घटज्ञानप्रतिबन्धकत्वं तथा व्यभिचारसंशयस्यापि ग्राह्यसंशयत्वाविशेषेण व्याप्तिज्ञानं प्रत्यपि न प्रतिबन्धकत्वमित्यङ्गीकृत्यैतावन्तं प्रयासमुपेक्षमाणेन यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतेत्यादिरीत्या व्याप्तिरभिहिता, अतस्तन्मतसिद्धायां व्याप्तौ स एवानुकूलतर्कं प्रदर्शयति— **यद्व्यतिरेकज्ञानमात्रस्येति** । तथा च प्रवृत्तिर्यदि प्रमात्वव्यतिरेक-

ज्ञानप्रतिबध्या न स्यात् प्रमात्वनिश्चयजन्या न स्यादित्याकारकापत्ति-रापाद्याभावेन प्रमात्वव्यतिरेकज्ञानप्रतिबध्यत्वेन प्रमात्वनिश्चयजन्य-त्वस्य प्रवृत्तौ सिद्धिः। **भट्टाचार्यास्तु** प्रमात्वज्ञानजन्यत्वसिद्धावपि न क्षतिः, प्रमात्वसंशये सति प्रवृत्त्यनुत्पादेन संशये स्वरूपयोग्यताक-ल्पनेऽपि न दोष इति वदन्ति ।

माध्यमिकाशङ्कां तटस्थो निराकरोति—**तत्संशयेति** । अर्थ-निश्चयधर्मिकप्रमात्वसंशये सतीत्यर्थः । तथा चार्थनिश्चये यदि प्रमा-त्वसंशयो वर्तते तदाऽर्थस्य संशय एव भवति, तत्संदेहे चार्थनि-श्चयरूपप्रवृत्तिकारणविरहात्प्रवृत्त्यभावोपपत्तौ प्रवृत्तिंप्रति प्रामाण्यव्य-तिरेकज्ञानाभावस्याहेतुत्वादर्थनिश्चयघटितक्लृप्तकारणसमुदायसत्त्वे प्रा-माण्यसंशयेऽपि प्रवृत्त्युत्पत्तौ सत्त्यां कारणीभूताभावप्रतियोगित्वरू-पप्रतिबन्धकत्वस्य प्रामाण्यव्यतिरेकज्ञाने विरहात्प्रवृत्तौ स्वरूपासिद्धि-रिति भावः ।

शङ्कते—**अथेति** । प्रमात्वव्यतिरेकज्ञानं यदि प्रवृत्तौ न प्रति-बन्धकं तदा यदा घटादिरूपार्थनिश्चयक्षण एव तन्निश्चयधर्मिकसमू-हालम्बनप्रमात्वसंशयस्तदा तादृशनिश्चयद्वितीयक्षणे प्रवृत्त्युत्पादापत्तिः पूर्वक्षणेऽर्थनिश्चयादिघटितप्रवृत्तिकारणसमुदायस्य सत्त्वात् । अतः प्रामाण्यव्यतिरेकज्ञानस्यापि प्रवृत्तिप्रतिबन्धकत्वं वाच्यं, अस्मन्मते च पूर्वक्षणेऽर्थनिश्चयसत्त्वेऽपि प्रामाण्यव्यतिरेकज्ञानरूपप्रतिबन्धकस्य सत्त्वान्न प्रवृत्त्युत्पादापत्तिः । यद्यपि प्रथमक्षणेऽर्थनिश्चयधर्मिकसंशयो वर्तते तदाऽर्थसंशयसमुदायकारणसंवलनात्तदुत्तरमर्थसंशय एव भवति प्रवृत्तिज्ञानयोर्यौगपद्यानभ्युपगमेन तदानीं प्रवृत्त्युत्पादनस्या-

सम्भवादित्युच्यते तदाऽप्याह–**तद्द्वितीयक्षणे वेति** । अर्थनिश्चय-द्वितीयक्षणे वेत्यर्थः । तथा च प्रथममर्थनिश्चयस्ततस्तद्धर्मिकप्रामाण्यसंशयस्ततः प्रवृत्त्यापत्तिः, प्रामाण्यसंशयक्षणेऽर्थनिश्चयकारणीभूतस्य कस्यचिद्विशेषणज्ञानस्य विनाशादर्थनिश्चयतृतीयक्षणेऽर्थसंशयोदयासम्भवेन भवति प्रवृत्त्यापत्तिरिति भावः । न च कार्यसहभावेनार्थनिश्चयस्य हेतुत्वोपगमान्नेयमापत्तिरिति वाच्यं, तथा सति प्रामाण्यसंशयादिविरहकालीनार्थनिश्चयात् तद्द्वितीयक्षणे कुतश्चित्प्रतिबन्धकवशात्प्रवृत्त्यनुत्पत्तौ तत्तृतीयक्षणे प्रवृत्त्यभावापत्तेरिति ध्येयम् ।

उत्तरयति–**इति चेन्नेति** । तथाचाप्रामाण्यज्ञानविरहविशिष्टार्थनिश्चयत्वेन प्रवृत्तिकारणत्वोपगमान्न तादृशस्थले प्रवृत्त्युत्पादापत्तिः तत्राप्रामाण्यज्ञानविशिष्टार्थनिश्चयसत्त्वेनाप्रामाण्यज्ञानविरहविशिष्टार्थनिश्चयरूपप्रवृत्तिकारणस्यासत्त्वात् । ननु अप्रामाण्यज्ञानाभावस्योक्तरीत्या प्रवृत्तिकारणतावच्छेदकतया प्रयोजकीभूताभावप्रतियोगित्वमेव प्रतिबन्धकत्वमस्तीत्याह दीधितौ–**न चेति**। तथा च कारणतावच्छेदकीभूताभावप्रतियोगित्वमेवात्र प्रतिबन्धकत्वपदेन विवक्षणीयम् । व्याप्तिसंशयान्यव्याप्तिज्ञानस्यैवानुमितिकारणतया तदवच्छेदकताया व्याप्तिसंशयभेदे सत्त्वेन तादृशभेदप्रतियोगित्वरूपप्रतिबन्धकत्वस्य व्याप्तिसंशयेऽपि सत्त्वान्न दृष्टान्तसिद्धिः ।

यदि च विनिगमनाविरहेणाप्रामाण्यज्ञानाभावविशिष्टार्थनिश्चयस्येवार्थनिश्चयाभावविशिष्टाप्रामाण्यज्ञानाभावस्यापि प्रवृत्तिहेतुत्वं निर्विवादमितिकारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वं प्रामाण्यव्यतिरेकज्ञानेऽक्षतं तदाप्याह–**अथवेति** । यन्निश्चयविरहविशिष्टस्येति ।

अर्थनिश्चयविरहविशिष्टस्य व्याप्तिनिश्चयविरहविशिष्टस्य वेत्यर्थः। तथा च यद्रूपावच्छिन्ननिश्चयविशिष्टत्वे सति तादृशनिश्चयविशिष्टाभावविशिष्टं यज्ज्ञानं तादृशज्ञानत्वावच्छिन्नाभावनिष्ठनियतपूर्ववृत्तिता-निरूपकयद्विशेष्यकयत्प्रकारकयज्जात्यवच्छिन्नकार्यतावद्यद्भवति तत् तद्रूपावच्छिन्ननिश्चयत्वावच्छिन्नजनकतानिरूपिततद्विशेष्यकतत्प्रकार-रकतज्जात्यवच्छिन्नजन्यतावद्भवतीतिव्याप्तिः। निश्चयवैशिष्ट्यं ज्ञाने स्वविशेष्यतावच्छेदकधर्मावच्छिन्नविशेष्यताकत्वस्वप्रकारतावच्छेदक-धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकत्वोभयसंबन्धेन। निश्चय-वैशिष्ट्यमभावे स्वप्रतियोगिकत्वस्वविशेष्योभूतनिश्चयप्रतियोगिकत्वा-न्यतरसम्बन्धेन। सर्वत्र स्वं साध्यीभूतनिश्चयः। अभाववैशिष्ट्यं ज्ञाने एकक्षणावच्छिन्नैकात्मवृत्तित्वसंबन्धेन। एवञ्चैतादृशयद्रूपावच्छिन्न-निश्चयः व्याप्तिनिश्चयः अर्थनिश्चयधर्मिकप्रमात्वनिश्चयोऽपि भवितु-मर्हति। तद्विशिष्टं तादृशाभावविशिष्टं च ज्ञानं प्रमात्वाद्यभावज्ञानं, तदभावनिष्ठनियतपूर्ववर्तिताकघटादिविशेष्यकघटत्वादिप्रकारकप्रवृत्ति-त्वजातीयकार्यतावत्त्वस्य प्रवृत्तौ सत्त्वात्तत्र प्रमात्वावच्छिन्ननि-श्चयत्वावच्छिन्नजनकतानिरूपिततादृशजात्यवच्छिन्नजन्यतारूपसाध्यस्य सिद्धिसम्भवात्।

निरुक्तानुगतयत्किञ्चिन्निश्चयाभावस्य यत्किञ्चिद्धर्मिकव्यतिरेक-ज्ञानस्य च लाभार्थं यन्निश्चयेत्याद्यभिहितम्। घटादिधर्मिकव्याप्त्य-भावज्ञानस्य प्रकृतहेतुभिन्नधर्मिकत्वात्तदभावस्यानुमितिनियतपूर्ववृत्ति-त्वाभावेन दृष्टान्तासिद्धिरतो यद्धर्मिकेत्याद्यभिहितम्। सामान्यतो-ऽनुमितित्वजात्यवच्छिन्ने कस्यापि व्याप्त्यभावज्ञानाभावस्य नियतपूर्व-

वर्तित्वाभावाच्च द्विशेष्यकेत्यांशभिहितम् । प्रथमजातिपदानुपादाने व्याप्त्यभावज्ञानाभावविषयकमानसप्रत्यक्षव्यक्तौ व्यभिचार आत्मविशेष्यकतादृशाभावविषयकप्रत्यक्षव्यक्तित्वावच्छिन्नम्प्रति व्याप्तिव्यतिरेकज्ञानाभावस्यापि विषयविधया नियतपूर्ववर्तितया तत्प्रत्यक्षव्यक्तौ हेतुसत्त्वेऽपि व्याप्तिनिश्चयजन्यत्वरूपसाध्यस्य विरहात् । द्वितीयजातिपदं हेतुघटकसाध्यघटकीभूतयोर्जात्योरेकत्वलाभार्थमिति ध्येयम् । यद्वा ईश्वरीयप्रमात्वनिश्चयनिष्ठजनकतानिरूपितकार्यत्वावच्छिन्नजन्यतामादाय सिद्धसाधनवारणाय द्वितीयं जातिपदमित्यपि चिन्तनीयम् ।

**अप्रयोजकत्वादिति** । अनुकूलतर्करहितत्वादित्यर्थः । अनुकूलतर्कश्च 'प्रवृत्तिर्यदिप्रामाण्यनिश्चयजन्या न स्यात्तर्हि प्रामाण्यव्यतिरेकज्ञानप्रतिबध्या न स्यादि'त्याकारकः पूर्वोक्त एव ग्राह्यः । प्रामाण्यव्यतिरेकज्ञानाभावो यदि प्रवृत्तौ कारणं स्यात्तदेव प्रामाण्यव्यतिरेकज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वं सम्भवति, तदेव तु न, अर्थसंशयकारणाभावत्वेनार्थनिश्चयसम्पादकतयैव प्रामाण्यव्यतिरेकज्ञानाभावस्य प्रवृत्तावपेक्षणीयत्वसम्भवे तस्य प्रवृत्तिकारणत्वं कथमपि न सम्भवतीति हृदयम् ।

तटस्थपूर्वपक्षं पुनर्माध्यमिको निराकुरुते—**इदमित्थमित्यादि** । तथा च सफलप्रवृत्तिं प्रति जनकीभूतेष्टसाधनताज्ञाने प्रामाण्यनिश्चयस्य जनकत्वासम्भवेऽपि अवश्यं तस्य प्रवृत्तावपेक्षणीयतया तं विना प्रवृत्तेरनुत्पादापत्तेरिति प्रामाण्यनिश्चयस्य स्वतो वा परतो वाऽसम्भवात्पूर्वपक्षसङ्गतिरिति भावः ।

मीमांसकः शङ्कते—**ननु स्वत एवास्तु तन्निरूपणमिति** ।

स्वतःप्रमात्वाश्रयव्यवसायात्मकज्ञानात् तन्निरूपणं प्रमात्वव्यवहार इत्युक्तौ व्यवहारं प्रति व्यवहर्तव्यज्ञानविधया प्रथमज्ञानस्यैव प्रयोजकत्वमागतम्। तथा सति गुरुमतस्यैव सङ्ग्रहः स्यात्, तन्मते प्रथमज्ञानस्यैव प्रथमज्ञानविषयत्वम्। एवं सति मिश्रभट्टयोर्मतसङ्ग्रहो न सम्भवत्यत आह—**स्वकीयादिति**। प्रमात्वाश्रयग्रहप्रयोज्यादित्यर्थः। अग्रेतनेन प्रमात्वव्यवहारार्थकप्रमात्वनिरूपणेन सहाऽन्वयः। **मुरारिमिश्रमते** प्रथमज्ञानप्रयोज्यप्रथमज्ञानानुव्यवसायस्तज्जन्यः, **भट्टमते** प्रथमज्ञानजन्या ज्ञातता तज्जन्या तल्लिङ्गिका प्रथमज्ञानविषयिण्यनुमितिस्तज्जन्यः प्रामाण्यव्यवहार स्तादृशानुमित्यनुव्यवसायादेर्व्यवहर्त्तव्यज्ञानस्वरूपत्वादिति भावः।

**स्वप्रकाशतयेत्यादि**। स्वतो ग्राह्यत्वं हि स्वाश्रयविषयकज्ञानजनकसामग्रीजन्ययावद्ग्रहविषयत्वम्। स्वं=प्रमात्वम्। **गुरुमते** अयं घटो घटत्ववति घटत्वप्रकारकज्ञानवानहमित्याकारकसमूहालम्बनरूपं घटप्रत्यक्षविषयकं प्रत्यक्षं भवति तदेव प्रमात्वाश्रयीभूतं ज्ञानं, तद्विषयकं ज्ञानं निरुक्तसमूहालम्बनरूपप्रत्यक्षं, तज्जनिका सामग्री चक्षुःसंयोगादिघटिता, तज्जन्यग्रहोनिरूक्तसमूहालम्बनरूपं प्रत्यक्षं तद्विषयत्वं प्रमात्वे। अत एव ज्ञानत्वव्यापकज्ञानत्वकत्वं स्वप्रकाशत्वमिति वृद्धाः। व्यापकता च स्वतादात्म्यस्वविषयकप्रत्यक्षत्वोभयसम्बन्धेन। **मुरारिमिश्रमते** प्रथमक्षणेऽयं घट इतिप्रत्यक्षं, द्वितीयक्षणे घटमहं जानामीत्याकारकः "घटत्ववति घटत्वप्रकारकज्ञानवानहमि"त्याकारकोवानुव्यवसायो भवति, तन्मते प्रमात्वाश्रयीभूतं प्राथमिकं घटप्रत्यक्षं तद्विषयकं ज्ञानं निरुक्तानुव्यवसायस्तज्जनिका सामग्री

मनःसंयोगादिघटितालौकिकमानसप्रत्यक्षजनिका, तज्जन्यो ग्रहः निरुक्तानुव्यवसायस्तद्विषयत्वं घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रमात्वे। भट्टमते ज्ञानमतीन्द्रियं, तेन च ज्ञाततारूपो धर्मो विषयनिष्ठः प्रात्यक्षिक उत्पद्यते तादृशधर्मेण कार्येण कारणस्य ज्ञानस्यानुमानं, "अयं घटः घटत्ववति घटत्वप्रकारकज्ञानविषयः घटत्ववति घटत्वप्रकारकज्ञाततावत्त्वादि"त्याकारकम्। तन्मते प्रमात्वाश्रयीभूतं घटज्ञानं तद्विषयकं ज्ञानं निरुक्तानुमितिस्तज्जनिका सामग्री परामर्शादिघटिता तज्जन्याया निरुक्ताया अनुमितेर्विषयत्वं प्रमात्वे। सर्वेषामेव मीमांसकानां मते प्रथमज्ञानविषयकयावज्ज्ञानविषयत्वं प्रमात्वे। **नैयायिकैस्तु** तादृशज्ञानविषयत्वं प्रमात्वे नाभ्युपगम्यत इति तैः सह विवादः। मिश्रगुरुमतसिद्धं प्रमात्वाश्रयीभूतं ज्ञानं प्रमात्वविषयकज्ञानानन्यत्वेन विशेषणीयं, तेन प्रमात्वकालीनघटज्ञानवानहमित्याकारकानुव्यवसायजनकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे नैयायिकैरपि स्वीकृततया तैः सह विवाद एव न सम्भवतीत्यत उपनीतभानजन्यप्रमात्वविषयकज्ञानवारणाय तादृशविशेषणं देयम्।

स्वतो ग्राह्यत्वसाध्यकपरजिगीषया प्रयुक्तन्यायप्रयोगरूपो विचारः, स च मध्यस्थसंशयं विना न सम्भवतीत्यतस्तत्संश्योत्पादिकां मतत्रयसाधारणीं प्रथमां विप्रतिपत्तिमाह-**तथाहि ज्ञानप्रामाण्यमित्यादि**। इयमुक्तिर्ग्रन्थकारस्यैव उत्तरवत्पूर्वपक्षस्यापि परिष्करणीयत्वादिति भावः। अत्र ज्ञानपदानुपादाने तद्धितान्तप्रामाण्यशब्दस्य भावल्युटा प्रमात्वमर्थः, प्रमीयते अनेनेति व्युत्पत्त्या करणल्युटा प्रमाकरणत्वमप्यर्थस्तयोरर्थयोर्मध्ये प्रमाकरणत्वरूपेऽर्थे मीमांसकानामपि

स्वतो ग्राह्यत्वासत्त्वाद्बाधः स्यादतः प्रमात्वरूपार्थग्रहणार्थं ज्ञानपदम्। ज्ञानपदात्तु ज्ञानवृत्तित्वव्याप्यप्रमात्वत्वरूपधर्मावच्छिन्ने स्वतो ग्राह्यत्वसिद्धिः प्रमाकरणत्वत्वरूपधर्मस्तु न ज्ञानवृत्तित्वव्याप्यः मनोनिष्ठप्रमाकरणतायामपि प्रमाकरणत्वत्वरूपधर्मस्य सत्त्वेन तत्र ज्ञानवृत्तित्वस्याऽसत्त्वात्। एतेन ज्ञानत्वनियतं न प्रमाकरणत्वं, नैयत्यञ्च ज्ञानमात्रवृत्तित्वरूपं ज्ञानकरणत्वत्वव्याप्यत्वरूपं वेत्युक्तिर्न सङ्गच्छते परामर्शनिष्ठकरणताया मनःप्रभृतिनिष्ठकरणतातो भिन्नतया तादृशपरामर्शनिष्ठकरणताया ज्ञानत्वव्याप्यत्वादिति पूर्वपक्षोऽपि निरस्तः।

वस्तुतः प्रवृत्तिजनकेष्टसाधनताज्ञाननिष्ठप्रमात्वनिश्चयमादायैव माध्यमिकपूर्वपक्षस्योत्थिततया तात्पर्यात्तादृशप्रमात्वमेवात्र प्रामाण्यपदे न ग्राह्यम्। एवञ्च ज्ञानपदोपादानं निरर्थकं स्यादित्यपि नाशङ्कनीयं प्रमात्त्वस्य तद्वति तत्प्रकारकज्ञानत्वरूपस्य तत्तद्विशेष्यादिभेदेन भिन्नतया कस्यापि प्रमात्त्वस्य ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वस्याप्रसिद्ध्या तत्तत्प्रमात्वव्यक्तेः पक्षत्वसूचनाय ज्ञानपदं, साध्यघटकस्वपदमपि तत्तत्प्रमात्वव्यक्तिपरमिति दीधितिकृतः।

**पक्षधरमिश्रास्तु**—मुरारिमिश्रभट्टयोर्मते यादृशं तद्वति तत्प्रकारकं ज्ञानं अनुव्यवसायानुमितिसामग्रीजन्यग्रहविषयीभूतं न भवति तादृशज्ञाननिष्ठं यत् तद्वति तत्कारकज्ञानत्वरूपं प्रमात्वं तत्र तन्मते बाधः स्यात्, स च साध्यसत्त्वस्यानिर्वाहरूपः स्वाश्रयविषयकज्ञानजनकसामग्र्या अप्रसिद्धेः। स्वप्रकाशवादिनां गुरूणां मते यदा ज्ञानं भवति तदा ज्ञानमपि ज्ञातं भवत्येव सुतरामज्ञातज्ञाननिष्ठप्रमात्त्वस्य तन्मतेऽप्रसिद्धत्वान्मिश्रभट्टमतमात्रानुसरणम्। यदा तु यज्ज्ञानपूर्वमप्रामाण्य-

ग्रहजनकसामग्री वर्त्तते तदा ज्ञानं न ज्ञातं भवितुमर्हति, न वा तन्निष्ठं प्रमात्वं तथा, अप्रामाण्यग्राहकसामग्रीसमवहिता या ज्ञानग्राहकसामग्री तद्भिन्नस्वप्रकाशसामग्र्या एव ज्ञानप्रमात्वग्राहकत्वादिति तु नाशङ्कनीयम्, अप्रमात्वं हि तदभाववति तत्प्रकारकज्ञानत्वं, तत्प्रकारकज्ञानं प्रति तज्ज्ञानं कारणमिति तज्ज्ञानसामग्र्या एव तज्ज्ञाननिष्ठप्रमात्वग्राहकतया तादृशसामग्रीकाले तज्ज्ञानघटिताऽप्रमात्वग्रहसामग्र्या वर्तमानत्वाऽसम्भवात्। अतः सर्वथैव गुरुमतस्योपेक्षा कृता। ज्ञानपदोपादानाज्ज्ञायमानप्रामाण्यस्य पक्षतया न बाधसम्भव इत्याहुः।

**तन्न, ज्ञानाऽज्ञानयोर्बाधबुद्ध्यसम्भवादिति** दीधितिः। अत्राऽयं भावः घटादि व्यक्तिविशेष्यकघटत्वादिप्रकारकत्वविशिष्टज्ञानत्वेन यदि तादृशज्ञानत्वरूपप्रमात्वस्य ज्ञानं भवति तदा न बाधबुद्धिः। तादृशज्ञानत्वज्ञानमवश्यं घटत्वादिप्रकारकत्वज्ञानत्वयोर्वैशिष्ट्यविषयकं वाच्यं, वैशिष्ट्यं तादृशप्रकारकत्वाधिकरणवृत्तित्वं, तादृशाधिकरणं च ज्ञानमेव नत्वन्यत्। एवञ्च तादृशज्ञानस्य निरुक्तवैशिष्ट्यविषयकत्वे तद्घटकज्ञानविषयकत्वस्याप्यक्षततया निरुक्तज्ञानत्वग्राहिकायाः सामग्र्या अपि ज्ञानग्राहकत्वात्तस्य धर्तुं शक्यतया तादृश सामग्र्याश्च प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च या घटज्ञानशाब्दबोधसामग्री तदन्यत्वेनापि धर्तुं शक्यतया च तादृशसामग्रीजन्यग्रहविषयत्वरूपसाध्यस्य प्रमात्वे सत्त्वान्न बाधबुद्धिः। यदि च घटत्वादिमद्व्यक्तिविशेष्यकघटत्वादिप्रकारकत्वविशिष्टज्ञानत्वत्वादिना तादृशज्ञानत्वरूपप्रमात्वज्ञानं न भवति तदापि न बाधबुद्धिः। निरुक्तस्वतोग्राह्यत्वानुमितौ हि निरुक्तानुमितिपूर्ववर्तितया

साध्यज्ञानं कारणम् । अत एवाग्रे दीधितिकृता ज्ञानत्वादौ साध्यप्रसिद्धिः प्रदर्शयिष्यते । तादृशसाध्यज्ञानं हि निरूपकत्वसम्बन्धेन स्वाश्रयज्ञानविषयत्वविशिष्टग्रहजनकसामग्रीजन्ययावद्ग्रहविषयत्वज्ञानम् । एवञ्च निरुक्तसाध्यज्ञानस्य प्राथमिकज्ञानविषयत्वविशिष्टग्रहनिष्ठविशेष्यताकतया द्वितीयग्रहे प्रथमज्ञानविषयत्वाभाववुद्धौ सुतरां साध्यज्ञानस्य प्रतिबन्धकत्वम् । साध्यज्ञानदशायां प्रथमज्ञानविषयत्वाभाववद्द्वितीयज्ञानविषयकग्रहानुत्पत्तौ तुल्यन्यायेन स्वाश्रयज्ञानविषयत्वविशिष्टज्ञानजनकसामग्रीजन्यग्रहविषयत्वाभावस्य प्रथमज्ञाने ज्ञानमपि साध्यज्ञानं प्रतिवध्नात्येव । तथा च प्रथमज्ञाने द्वितीयज्ञानविषयत्वज्ञानसम्भवे प्रमात्वे द्वितीयज्ञानविषयत्वज्ञानस्याक्षततया पक्षे साध्याभावज्ञानरूपबाधवुद्धेरसम्भवात् । तथा चोक्तं भट्टाचार्यैः पक्षीभूतं यत्प्रामाण्यं तदाश्रयज्ञानविषयत्वस्य तद्विशेष्यतया तादृशविषयत्वविशेष्यतया विशेषणे तृतीया, अन्वयश्चास्य साध्यघटकीभूतग्रहे । तथा च तादृशविषयत्वविशेष्यतापन्ने साध्यघटकीभूते द्वितीयग्रहे इत्यर्थः पर्यवसितः । अभावग्रहाऽसम्भवात् पूर्वोक्तविषयत्वस्याभावग्रहासम्भवादिति ।

केचित्तु—तद्विशेष्यतया स्वाश्रयज्ञानविशेष्यतया प्रथमज्ञानविषयत्वं हि आधेयतया प्रथमज्ञानस्य विशेष्यीभूतं भवति साध्यघटकीभूते ग्रहे प्रथमज्ञानेऽभावग्रहाऽसम्भवात् तादृशविषयत्वस्येति पूर्वेणान्वयः । तथा च यथा आधेयतया ह्रदविशिष्टवह्निज्ञानस्य पूर्वं सत्त्वे ह्रदादौ वह्न्यभावस्य ज्ञानं न सम्भवति तथा आधेयतया पूर्वं प्रथमज्ञानविशिष्टविषयत्वग्रहरूपसाध्यग्रहसत्त्वे प्रथमज्ञानेऽपि द्वितीयग्रहविषयत्वा-

भावरूपबाधग्रहस्याप्यसम्भवः, एवञ्चागृहीतज्ञाननिष्ठप्रमात्वमेव न सम्भवतीति हृदयमित्याहुः ।

यावत्पदानुपादाने मीमांसकमतसिद्धे साध्ये स्वतो ग्राह्यत्वं सिद्धसाधनं घटज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्याकारकयत्किञ्चिदनुमितिविषयत्वस्य प्रमात्वे नैयायिकैरिव मीमांसकैरप्यभ्युपगम्यमानत्वात् । एवं नैयायिकमतसिद्धे साध्ये स्वतो ग्राह्यत्वाभावेऽसिद्धिर्बाधश्च भवति यत्किञ्चिज्ज्ञानपदेन 'घटज्ञानं प्रमा सर्वमभिधेयमि'त्याकारकसमूहालम्बनानुमितेरपि धर्तुं शक्यतया तद्विषयत्वस्य केवलान्वयित्वेन सर्वत्र सत्त्वात् तदभावरूपसाध्याऽप्रसिद्धिः, अभावसाधने प्रतियोगिमत्त्वमेव पक्षे बाधः, न तु साध्याभाववत्पक्षस्तथा साध्याभावस्याऽप्रसिद्धेः। अथवा स्वतो ग्राह्यत्वाभावसाधने साध्याऽप्रसिद्धिः स्वतो ग्राह्यत्वं प्रमात्वनिष्ठाभावप्रतियोगीत्याकारकप्रतियोगित्वस्यापि साध्यत्वेन नैयायिकमतसिद्धिसम्भवात् । एवञ्च तादृशप्रतियोगित्वस्य साध्यतास्थले तादृशप्रतियोगित्वाभावरूपबाधस्य प्रसिद्धिः । स्वतो ग्राह्यत्वाभावरूपसाध्यत्वाभिप्रयेण पूर्वोक्तरीत्या साध्याप्रसिद्धिरभिहितेति तत्त्वम् ।

सामग्र्या यावत्त्वनिवेशनेऽप्रसिद्धिर्यावत्सामग्रीजन्यग्रहस्याप्रसिद्धेः । ज्ञानग्राहकसामग्रीत्वव्यापकस्वग्राहकत्वरूपयावत्पदघटितसाध्यविवक्षणे यावत्पदस्य व्यापकतार्थकतया सार्थक्यसम्भवेऽपि सामग्रीत्वपर्यन्तानुसरणस्य वैयर्थ्यापत्तेः ज्ञानग्राहकताव्यापकस्वग्राहकताकत्वविवक्षणेनैव सामञ्जस्यादित्यालोच्य तादृशसामग्रीजन्यग्रहे एव व्यापकतार्थकयावत्त्वविशेषणं देयमित्याह दीधितौ—**तथा चेति** ।

तथा च स्वाश्रयविशेष्यकज्ञानजनकसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकं नवेति विप्रतिपत्तिरनुसन्धेया ।

अथ नैयायिकमतेऽनुव्यवसायादौ केवलघटत्वप्रकारकत्वविषयिताया वर्तमानतया तादृशविषयितात्वेन साध्ये प्रमात्वविषयिताया अपि तादृशग्रहत्वव्यापकतया नैयायिकमताविशेषप्रसङ्गः। घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वविषयितायास्तादृशग्रहत्वव्यापकत्वविवक्षणे तु नैयायिकमते साध्याप्रसिद्धिः। यदपि स्वाश्रयविषयकज्ञानजनकसामग्रीजन्यग्रहत्वव्यापकतायां निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकता मीमांसकानां साध्यं, तच्च तादृशग्रहनिष्ठाभावप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववत्त्वम् । नैयायिकानां मते तु तदभावः।साध्यमिति न कोऽपि दोषः। तदपि न, गुरुमते व्यवसायरूपे ज्ञानग्रहे प्रमात्वाधिकरणतासत्त्वे तादृशाधिकरणतायास्तादृशग्रहत्वव्यापकतया तादृशव्यापकतानिरूपितनिरूपितत्वसम्बन्धेनावच्छेदकत्वस्य प्रमात्वे सत्त्वाद्, व्यवसाये प्रमात्वविषयितायां मानाभावः प्रमाण्याधिकरणत्वेन गुरुमतसिद्धे व्यवसायात्मकज्ञाने प्रामाण्यविषयिताया अनुमितत्वाभ्युपगमेऽपि न निस्तारः केवलघटत्वप्रकारकत्वादौ स्वाश्रयविषयकज्ञानजनकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वपर्याप्तिविरहसत्त्वे घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वेऽपि तादृशावच्छेदकत्वपर्याप्तिविरहस्य नैयायिकमतसिद्धत्वेन सिद्धसाधनस्य दुर्वारतापत्तेः पक्षविशेषणघटत्वादिमद्विशेष्यकत्वावच्छेदेन साध्यसिद्धिं स्वीकृत्यापि सिद्धसाधनवारणाऽसम्भवाद् अनुमानात् पक्षविशेषणावच्छेदेन

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



साध्यवत्त्वस्याऽप्रसिद्धत्वात् । न हि 'रूपवत्पर्वतो वह्निमानि'त्यादौ रूपवत्त्वावच्छेदेनापि वह्निरूपसाध्यवत्त्वमनुमितं सम्भवति । घटत्वादिमद्विशेष्यकत्वरूपविशेषणावच्छेदेन विशेष्ये घटत्वप्रकारकत्वादावेव तादृशावच्छेदकत्वपर्याप्तिविरहसाधने गुरुमते न सिद्धसाधनमित्यपि न युक्तं घटत्वप्रकारकत्वादौ वर्त्तमानायां तादृशावच्छेदकत्वपर्याप्तिविरहाधिकरणतायां घटत्वप्रकारकत्वत्वावच्छिन्नत्वस्येव तादृशप्रकारकत्वविशेषणघटत्वादिमद्विशेष्यकत्वावच्छिन्नत्वस्यापि न्यायमतसिद्धत्वात् घटत्वादिमद्विशेष्यकत्वे तादृशावच्छेदकतापर्याप्त्यनवच्छेदकत्वस्य नैयायिकैरभ्युपगम्यमानतया तत्र तादृशावच्छेदकत्वपर्याप्तिविरहस्यापि नैयायिकैरवश्यं स्वीकरणीयत्वात् प्रतियोग्यनवच्छेदकताया अभावावच्छेदकत्वनियतत्त्वस्य प्राचीनमतसिद्धत्वात् । तथा च सिद्धसाधनस्य कथामात्रेण वारयितुमशक्यत्वाद् यत्तु मतमति तुच्छमिति भाव इति चेन्न, स्वाश्रयविषयकज्ञानजनकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगित्वं तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वविषयितात्वानवच्छिन्नं न वेति विप्रतिपत्तेरादरणीयत्वात् । तादृशानवच्छिन्नत्वकोटिर्मीमांसकानां, तदभावकोटिर्नैयायिकानामित्यलं पल्लवितेन ।

सामग्रीपदानुपादाने घटत्वप्रकारकघटविशेष्यकज्ञानविषयकज्ञानजनकयत्किञ्चित्कारिणीभूतं यद् आत्मशरीरेन्द्रियादिकं तज्जन्यया-चद्ग्रहान्तर्गत 'पटत्ववतिघटत्वप्रकारकज्ञानग्रहादे'रपि धर्त्तुं शक्यतया तद्विषयत्वस्य गुरुमतातिरिक्तमतेऽप्रसिद्धतया साध्याप्रसिद्धेः । गुरुमते तु आत्मन्येव सकलज्ञानविषयिताया प्रसिद्धतया गुरुमतातिरिक्तेत्युक्तम् । सामग्रीपदानुपादाने तु केवलात्मनः, केवलशरीरस्य केवले-

न्द्रियादेश्च धर्त्तुमशक्यत्वान्न साध्याप्रसिद्धिः।

अथ सामग्रीपदोपादानेऽपि तत्तन्मनोयोगादिव्यक्तिघटितयावत्कारणजन्यग्रहस्याप्रसिद्धिः, सामग्रीपदेन प्रागभावमात्रस्य विवक्षणे तु कथञ्चित्तज्जन्यग्रहस्य प्रसिद्धिसम्भवेऽपि ओदनकामकर्त्तव्यताज्ञानविषयः पाक इत्याकारकशाब्दबोधस्य शब्दानधीनौदनसाधनताज्ञानविषयकस्य या सामग्री निरुक्तौदनसाधनताज्ञानरूपयोग्यताज्ञानशालिनी तस्याः प्रागभावभिन्नतया तामादाय दीधितिकृतामग्रे दोषदानस्याऽसङ्गतत्वापत्तेरितिचेन्न, स्वाश्रयविषयकज्ञानोत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नप्रयोज्योत्पत्तिकग्रहविषयत्वस्यैव मीमांसकनये साध्यत्वात्। तथा च तत्तज्ज्ञानोत्पत्तिप्रयोजकतावच्छेदकतत्तत्समुदायत्वमादायैव प्रमात्वे साध्यसत्त्वनिर्वाहसम्भवादिति न कोऽपि दोषः।

ननूभयमतसिद्धसाध्यस्य कुत्रापि न प्रसिद्धिः, ज्ञानव्यक्तीनां विभिन्नतयैकैकज्ञानव्यक्त्यादिज्ञानस्य विषयतायाः कुत्रापि ज्ञानव्यक्तावप्रसिद्धत्वाद् अत आह—**तज्ज्ञानेति**। तथा च स्वाश्रयतद्व्यक्तिविषयकज्ञानजनकसामग्रीजन्यग्रहविषयत्वं तज्ज्ञानव्यक्तावित्यादिरीत्या तत्तज्ज्ञानव्यक्तौ उभयमते साध्यप्रसिद्धिः, तत्तद्व्यक्त्यनिवेशेऽपि उभयमते साध्यप्रसिद्धिरित्याह—**ज्ञानत्वविशिष्टेति**। तथा च स्वाश्रयज्ञानत्वविशिष्टविषयकज्ञानजनकसामग्रीजन्यग्रहविषयत्वस्योभयमते ज्ञानत्वे प्रसिद्धिसम्भवान्न दोष इति भावः। तदप्रामाण्याग्राहकत्वस्य सामग्र्यां विशेषणत्वानुक्तौ "इदं ज्ञानमप्रमा" इत्याकारकघटज्ञानविषयकाप्रमात्वविषयकं यज्ज्ञानं तज्जनकदोषादिघटितसामग्र्या अपि ज्ञानग्राहकत्वात् तज्जन्यग्रहविषयत्वस्य

प्रमात्वे विरहाद् बाधः स्यादतस्तदप्रामाण्याग्राहकत्वं सामग्र्यां विशेषणं, तथा च निरुक्तायाः दोषघटितसामग्र्याः घटज्ञानेऽप्रमात्वग्रहजनकत्वात्तद्वारणम् ।

यद्यपि अप्रमात्वग्राहकत्वं सामग्र्यां निवेश्यते तदा घटज्ञानं भ्रमइत्याकारकभ्रमग्राहकसामग्रीमादाय बाधः अतो भ्रमत्वप्रमात्वयोरेकरूपेणानुगत्वं दर्शयति--**प्रामाण्यावच्छेदकेति** । तथा च तत्प्रामाण्यावच्छेदेन प्रामाण्यवदवृत्ति यद् यत्तदन्यत्वं तादृशोभयसाधारणधर्मः, एवञ्चोक्तरीत्या घटत्वपटत्वादीनां प्रामाण्यविरोधित्वेन रूपेण सङ्ग्रहः सम्भवति प्रामाण्यावच्छेदकावच्छेदेन प्रामाण्यवति घटत्वादेरवर्तमानत्वात् । प्रामाण्यावच्छेदकावच्छेदेनेत्यनुक्तौ घटत्वेन यदा घटपटविषयकं ज्ञानं भवति तदा प्रमात्वाभावस्य प्रमात्ववति निरुक्तज्ञाने वर्तमानतया तत्र भिन्नत्वासम्भवेन तादृशाप्रमात्वस्यासङ्ग्रहः स्यात् । प्रामाण्यावच्छेदकेत्यभिधाने तु न तादृशाप्रमात्वस्यासङ्ग्रहः घटत्ववद्विशेष्यकत्वावच्छेदेन घटत्वाभाववति घटत्वप्रकारकत्वरूपाप्रमात्वस्य तादृशघटत्वेन घटपटविषयकज्ञानेऽवर्तमानत्वात् ।

न चैवं ज्ञानत्वस्य व्याप्यवृत्तितया प्रमात्ववति तस्य प्रामाण्यावच्छेदकावच्छेदेनाऽवर्तमानत्वात्तादृशज्ञानत्वादेः प्रामाण्यविरोधित्वापत्तिः, तथा च ज्ञानग्राहकसामग्रीमात्रस्यैव ज्ञानत्वग्राहकतया तस्य प्रामाण्यविरोध्यग्राहकत्वासम्भव इति वाच्यम्, प्रमात्वावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववत्प्रमानिष्ठाधिकारणताकं यद्यत्तद्व्यक्तिभेदकूटत्य प्रमात्वविरोधित्वपदेन विवक्षितत्वात् । प्रमानिष्ठायां ज्ञानत्वाधिकारणतायां प्रमात्वाच्छेदकानवच्छिन्नत्वसत्त्वेऽपि अवच्छे-

न्नत्वाभाववत्त्वेनोभयाभावस्याक्षततया तादृशोभयाभाववत्प्रमानिष्ठाधिकरणताकं यज्ज्ञानत्वं तज्ज्ञानत्वभेदस्य ज्ञानत्वे विरहेण प्रामाण्यविरोधिपदेन ज्ञानत्वस्य धर्तुमशक्यत्वात्। एवं घटत्वेन घटपटविषयकज्ञानरूपप्रमानिष्ठायां घटत्वाभाववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वाधिकरणतायां प्रमात्वावच्छेदकाऽनवच्छिन्नत्वस्य अवच्छिन्नत्वस्य च सत्त्वेनोभयाभावस्यासत्त्वात्। तादृशोभयाभाववत्प्रमानिष्ठाधिकरणताकं यज्ज्ञानत्वं तदन्यत्वस्य तादृशघटत्वाभाववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपाप्रमात्वे सत्त्वेन तादृशाप्रमात्वस्य प्रमात्वविरोधित्वसम्भवः। घटत्वपटत्वादेरधिकरणतायाः प्रमायामसत्त्वात्। तादृशाधिकरणताकभिन्नत्वेन घटत्वादीनां प्रामाण्यविरोधित्वं बोध्यम्। अन्यतराभावनिवेशे प्रमानिष्ठज्ञानत्वाधिकरणतायामन्यतराभावासत्त्वात्तादृशान्यतराभावाधिकरणताकभिन्नत्वेन ज्ञानत्वादेः प्रामाण्यविरोधित्वापत्तिरतस्तादृशान्यतराभावो न निवेशनीयः।

वस्तुतोऽन्यतराभावनिवेशोऽसम्भवः कस्यापि वस्तुनः प्रमानिष्ठाधिकरणतायामन्यतराभावस्यासत्त्वादिति ध्येयम्। केवलं प्रमात्वावच्छेदकानवच्छिन्नत्वाभावविवक्षणे ज्ञानत्वादेः प्रमात्वाविरोधित्वापत्तिः प्रमात्वावच्छेदकानवच्छिन्नत्वाभावस्य प्रमानिष्ठायां ज्ञानत्वाधिकरणतायामसत्त्वात् तादृशाधिकरणताकयत्पदेन घटत्ववति घटत्वप्रकारकत्वस्यैव धर्तुं शक्यत्वात् तद्भिन्नत्वस्य ज्ञानत्वे सत्त्वात्। केवलावच्छिन्नत्वाभावविवक्षणे घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वस्यापि प्रमात्वविरोधित्वापत्तिः प्रमानिष्ठायां तदधिकरणतायामवच्छिन्नत्वाभावस्यासत्त्वात्। तादृशावच्छिन्नत्वाभाववत्प्रमानिष्ठाधिकरण-

ताकज्ञानत्वभिन्नत्वस्य तत्र सत्त्वात्। प्रमात्त्वावच्छेदकानवच्छिन्नत्व-विशिष्टावच्छिन्नत्वाभावविवक्षणे लाघवसम्भवेऽपि उभयाभावस्याख-ण्डभेदघटकतया न वैयर्थ्यमित्यवधेयम्। यद्वा विशिष्टाभावस्य विशेषणाभावस्वरूपत्वमते तादृशविशिष्टाभावस्य केवलप्रमात्वावच्छे-दकानवच्छिन्नत्वाभावरूपतया तादृशाभावस्य ज्ञानत्वाधिकरणताया-मसत्त्वाज्ज्ञानत्वस्य प्रमात्वविरोधित्वापत्तिवारणाय उभयाभावनिवेशः।

ननु प्रामाण्यविरोध्यग्राहकत्वविवक्षणेनैव 'इदं ज्ञानमप्रमे'त्या-कारकज्ञानजनकसामग्रीवारणसम्भवे तत्पदं निरर्थकमित्याशङ्कां निरा-कर्तुमाह दीधितौ—**घटत्वनिष्प्रकारकत्वादीति**। तथा च घटत्वप्रकारकज्ञानानुव्यवसायसामग्र्याः प्रमात्वविरोधिनो घटत्वादेर्भान-प्रयोजकतया प्रामाण्यविरोध्यग्राहकसामग्र्या अप्रसिद्धिः स्याद् यदि तत्पदोपादानं न स्यात्। यदि च प्रामाण्यविरोधी यो ज्ञानवृत्तिधर्मस्त-दग्राहकत्वं सामग्र्यां विशेषणं देयं तदा न प्रामाण्यविरोध्यग्राहिका याः सामग्र्या अप्रसिद्धिर्घटत्वादेर्ज्ञानवृत्तित्वविरहादित्यालोच्य स्थ-लविशेषे तादृशविरोध्यग्राहकत्वमप्रसिद्धमित्याह—**निष्प्रकारक-त्वेति**। तथा च निष्प्रकारकत्ववति निष्प्रकारकत्वप्रकारकं यत्प्रामा-ण्यज्ञानं तद्विषयकानुव्यवसायादिसामग्र्यां ज्ञानवृत्तिप्रामाण्यविरोधिनो निष्प्रकारकत्वादेर्धर्मस्य भानप्रयोजकतायाः सत्त्वात् तादृशस्थले ज्ञानग्राहकसामग्र्यां ज्ञानवृत्तिप्रामाण्यविरोध्यग्राहकत्वस्याप्रसिद्धिरत-'स्त'त्पदम्। तदुपादाने तु तस्मिन् प्रमात्वाश्रयीभूते ज्ञाने प्रकारीभूतो यः प्रामाण्यविरोधीधर्मस्तदग्राहकत्वं ज्ञानग्राहकसामग्र्यां विशेषणं पर्यवसितम्। एवञ्च घटत्वनिष्प्रकारकत्वादेः घटज्ञाने निष्प्रकारकज्ञाने

चाप्रकारकत्वेन तस्मिन् प्रामाण्यविरोधिधर्मपदेन घटत्वनिष्प्रकारकत्वादेः धर्तुमशक्यत्वादिति भावः।

ननु गुरुमते भ्रमस्यालीकतया प्रामाण्याश्रयीभूते ज्ञानेऽप्रामाण्यभ्रमस्याऽप्रसिद्धतया तद्विशेष्यकाप्रामाण्यभ्रम एव तन्मतेऽप्रसिद्ध इत्यत आह दीधितिकार---**अप्रामाण्यग्रह** इति। गुरुभिस्तु इदं ज्ञानमप्रमेति व्यवहारोऽङ्गीक्रियते, तादृशव्यवहारं प्रति व्यवहर्त्तव्यज्ञानविधया ज्ञानद्वयं कारणं, तत्रैकम् इदमित्याकारकज्ञानस्यानुभवरूपमपरञ्चाऽप्रामाण्यस्य स्मरणरूपं, तन्मते ज्ञानद्वयविषयीभूतधर्मधर्मिणोरप्रामाण्येदंज्ञानयोरपि प्रकारविशेष्यभावोऽस्त्येव। तथा च प्रामाण्याश्रयीभूततज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिप्रकारकताकग्रहाजनकत्वं ज्ञानग्राहकसामग्र्यां विशेषणमिति पर्यवसितम्। यत्र तु तादृशप्रामाण्यभ्रमो न जनित स्तत्राग्राहकान्तं न देयम्। तस्याप्रामाण्यं तदप्रामाण्यमिति षष्ठीसमासमादृत्य मिश्रव्याख्यानुसरणे तदीयप्रामाण्यविरोध्यर्थस्यैव पर्यवसिततया निष्प्रकारकत्वादेः सकलप्रामाण्यविरोधिनो ग्राहकसामग्र्यां ज्ञानग्राहिकायां तादृशप्रामाण्यविरोध्यग्राहकत्वमसंभवीत्यतस्तदितिलुप्तसप्तमीकमित्युक्तम्।

ननु इदं घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्याकारकज्ञानविषयकज्ञानजनकसामग्र्या घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकज्ञानत्वरूपप्रामाण्यग्रहाजनकत्वान्मीमांसकनये बाधः। यद्यप्युक्तज्ञानग्रहजनक सामग्र्या घटत्वप्रकारकत्वप्रकारकज्ञानजनकताया अवश्यं वक्तव्यतया तादृशघटत्वप्रकारताया निरुक्तसामग्रीजन्यग्रहविषयत्वस्य सत्त्वेन प्रामाण्येऽपि तादृशघटत्वप्रकारकज्ञानज्ञानविषयत्वं निराबाध-

मेव प्रकारताया घटत्वनिष्ठाया तत्र तस्मिन् घटादौ भासमानं ज्ञानविषयीभूतं यद्वैशिष्ट्यं समवायादिसम्बन्धस्तत्प्रतियोगित्वस्वरूपतया प्रकारताघटकताद्दशसम्बन्धादौ घटत्वप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्यापि सत्त्वेन प्रामाण्यघटकयावत्पदार्थे ताद्दशसामग्रीजन्यग्रहविषयत्वस्याक्षतत्वात्। तत्र भासमानवैशिष्ट्यप्रतियोगित्वमित्यत्र वैशिष्ट्ये तन्निष्ठत्वं भासमानत्वञ्चाभिप्रेतम्। वैशिष्ट्ये ज्ञानविषयत्वरूप भासमानत्वानुपादाने 'पुरुष' इति ज्ञाने दण्डादेः प्रकारतापत्तिः पुरुषनिष्ठसंयोगप्रतियोगित्वस्य दण्डादौ सत्त्वात् ताद्दशभासमानत्वं तत्पदार्थेऽपि निवेशनीयम्, अन्यथा 'घटो द्रव्यमि'त्याकारकज्ञानीयद्रव्यत्वादौ पटादिनिरूपितप्रकारतापत्तिः भासमानसमवायप्रतियोगित्वस्य पटादिनिष्ठद्रव्यत्वेऽपि सत्त्वाद् द्रव्यत्वस्यैक्यात्। एवं प्रतियोगित्वेऽपि भासमानत्वं विवक्षणीयमन्यथा 'दण्डपुरुपसंयोग' इत्यादिज्ञाने दण्डादेः प्रकारतापत्तिः स्याद् दण्डादौ भासमानसंयोगप्रतियोगित्वस्य सत्त्वात्। अत एव केवल'पुरुष'इत्याकारकज्ञाने प्रतियोगित्वस्याऽभासमानतया दण्डादेः प्रकारत्ववारणसम्भवे वैशिष्ट्ये भासमानत्वविशेषणं व्यर्थमिति तु नाशङ्कनीयं 'प्रतियोगी दण्डपुरुष' इत्यादिज्ञाने दण्डादेः प्रकारतापत्तिवारणाय वैशिष्ट्ये भासमानत्वविशेषणस्याऽवश्यकत्वात्। न च 'संयोगप्रतियोगी दण्डः पुरुषश्चे'त्याकारकज्ञाने दण्डादेः प्रकारतापत्तिः भासमानवैशिष्ट्यप्रतियोगित्वस्य भासमानतया तस्य दण्डे सत्वादिति वाच्यं; तज्ज्ञानविशिष्टप्रतियोगित्वं तज्ज्ञानप्रकारत्वम्; प्रतियोगित्वे तज्ज्ञानवैशिष्ट्यं स्वनिरूपितविषयतावत्त्वस्वविशिष्टसंसर्गत्वाभिन्नवैशिष्ट्यनिष्ठ-

विषयतानिरूपितसंसर्गत्वाभिन्नविषयतावत्वोभयसम्बन्धेन, स्ववैशिष्ट्यं वैशिष्ट्यविषयतायां स्वनिरूपितत्वस्वविषयीभूतधर्मिवृत्तिवृत्तित्वोभयसम्बन्धेनेत्यस्य विवक्षणीयत्वात्, अत एव संयोगप्रतियोगी दण्डः पुरुषश्चेत्याकारकज्ञानीयसंयोगादिविषयतायाः संसर्गतानात्मकत्वेन तादृशज्ञानीयधर्मिवृत्तिवृत्तित्वाभावेन च दण्डादेर्नोक्तज्ञानप्रकारतापत्तिः।

प्रतियोगितासम्बन्धेन पुरुषनिष्ठसंयोगवान् दण्ड इत्याकारकज्ञाने पुरुषनिष्ठसंयोगप्रतियोगित्वस्य संसर्गतया भानेन तादृशप्रतियोगित्वमादाय दण्डादेः प्रकारतावारणाय वैशिष्ट्यनिष्ठविषयतायाः सम्बन्धमध्ये संसर्गत्वाभिन्नत्वेन निवेशः। स्वनिष्ठसंयोगप्रतियोगित्वसम्बन्धेन 'पुरुषे दण्ड' इत्याकारकज्ञाने दण्डादेः प्रकारत्वं स्यात् पुरुषनिष्ठसंयोगप्रतियोगित्वस्य दण्डे सत्त्वादतो धर्मिनिष्ठसंसर्गे संसर्गत्वेन प्रतियोगित्वविषयताया पूर्वोक्तसम्बन्धमध्ये निवेशः। उक्तस्थले तु धर्मिनिष्ठसम्बन्धे प्रतियोगित्वादेरसंसर्गत्वान्न दोषः। तथा चोक्तरीत्या विशिष्टबुद्धौ संसर्गसंसर्गस्यापि भानाभ्युपगमेन प्रामाण्यघटकयावत्पदार्थस्यापि पूर्वोक्तघटत्वप्रकारकज्ञानेन विषयीकरणान्न मीमांसकनये बाध इत्युच्यते, तथापि प्रकारत्वस्य स्वरूपसम्बन्धविशेषात्मकताया स्वीकरणीयत्वान्मीमांसकनये पूर्वोक्तस्थले बाधो दुर्वार एव। वस्तुतो घटज्ञानशाब्दबोधसामग्रीमादायैव बाधो बोध्यः।

तथाहि घटज्ञानविषयकशाब्दबोधसामग्र्या ज्ञानग्राहकतया अप्रामाण्याग्राहकतया च धर्तुं शक्यत्वेन तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति चेदत्र **पक्षधरमिश्राः**—यादृशसामग्री ज्ञानविषयत्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकत्वावच्छिन्न-

विषयविषयत्वावच्छिन्नप्रयोज्यत्वनिरूपितप्रयोजकतावती, तादृशसामग्रीजन्यग्रहविषयत्वं साध्यम्। भवति हि अनुव्यवसायादिसामग्र्या व्यवसायमनःसंयोगादिघटितायाः ज्ञानभानप्रयोजकत्वेनैव घटादिरूपविषयभानप्रयोजकत्वाद अनुव्यवसायादिसामग्रीसंग्रहः, घटज्ञानशाब्दबोधसामग्र्याश्च ज्ञानपदघटिततया तत्र ज्ञानभानप्रयोजकत्त्वेन घटादिरूपविषयभानप्रयोजकत्वस्यासत्त्वात् घटभानं प्रति घटपदस्यैव प्रयोजकत्वात् तादृशशाब्दबोधसामग्रीवारणञ्चासंभवति।

नन्वेवं पूर्वोक्तयावत्पदव्यावृत्तिरसङ्गता "घटज्ञानं प्रमेत्याकारक" यत्किञ्चिदनुमितीयविषयभानं प्रति व्यापकतावच्छेदकताया एव प्रयोजकतया तस्याश्च ज्ञानभानं प्रत्यप्रयोजकत्वादित्यत आह— **एकयैव शक्त्येति**। तथा च तद्वति तत्प्रकारकज्ञानत्वावच्छिन्ननिरूपितशक्तिमत्प्रमापदजन्यशाब्दबोधात्मकग्रहविषयत्वस्य प्रमात्वे उभयवादिसिद्धतया सिद्धसाधनापत्तिः निरुक्तप्रमापदस्य विषयज्ञानभानोदयप्रयोजकत्वेन यथोक्तविशेषणाक्रान्तत्वादतो यावत्पदम्। एवं'मिदं ज्ञानं भ्रम'इत्याकारकानुमित्यादिसामग्र्यां भ्रमात्मकज्ञानग्राहकत्वविषयग्राहकत्वयोरसत्त्वेऽपि तदभाववति तत्प्रकारकज्ञानत्वावच्छिन्ननिरूपितशक्तिमद्भ्रमपदजन्यग्रहविषयत्वस्य प्रमात्वे विरहाद्बाधवारणाय अप्रामाण्याग्राहकत्वं सामग्र्यां विशेषणीयम्। वस्तुतो ज्ञानग्राहकताव्यापकविषयग्राहकताकसामग्रीजन्यग्रहविषयत्वं पक्षधरमिश्रमते साध्यं पर्यवसितमित्याहुस्तन्न, गुरुमते ज्ञानग्राहकताया व्यापकत्वं न विषयग्राहकतायां परन्तु विषयग्राहकताऽव्यापकत्वमेव ज्ञानग्राहकतायामिति तन्मतसिद्धसामग्र्यसङ्ग्रहात्। ज्ञानभानाऽप्रयोजकाप्रयुक्तं

यदि विषयभानमुच्यते तदापि न निस्तारः भट्टमते ज्ञानभानप्रयोजकः परामर्शः, विषयभानं प्रति तु व्यापकतावच्छेदकत्वमिति तन्मतसिद्ध-सामग्र्यसंग्रहस्य दुर्वारतापत्तेः। किञ्च यादृशस्थले तत्पदेन घटज्ञानस्यै-वोपस्थितिस्तदनन्तरं घटज्ञानशाब्दबोधस्तादृशस्थले तादृशशाब्दबोध-सामग्र्यां तत्पदघटितायां ज्ञानभानप्रयोजकत्वेनैव विषयीभूतघटभान-प्रयोजकतया तादृशसामग्रीजन्यशाब्दबोधविषयत्वस्य प्रमात्वे विरहेण बाधस्य दुःशक्यवारणत्वादतो मिश्रमतं न समीचीनमिति चेद् ।

**अत्र वदन्ति**—तज्ज्ञानप्रामाण्यविषयकज्ञानाजनकत्वेन ज्ञानवि-षयकज्ञानजनकत्वेन या भट्टमतसिद्धा सामग्री तदन्या ज्ञानविषयकग्रह-जनिका या सामग्री तज्जन्ययावद्ग्रहविषयत्वं मीमांसकनये साध्यमिति विवक्षणे न दोषः। घटज्ञानविषयकशाब्दबोधजनकसामग्र्या घटज्ञा-नप्रामाण्याग्राहकत्वेन घटज्ञानविषयकशाब्दबोधरूपज्ञानग्रहजनकत्वेन च भट्टमतसिद्धतया तदन्यत्वस्य तादृशसामग्र्यामसत्त्वान्न घटज्ञानशा-ब्दबोधसामग्रीमादाय बाधः। गुरुमतसिद्धाया घटप्रत्यक्षजनकसा-मग्र्या भट्टमते प्रामाण्याग्राहकत्वेऽपि ज्ञानग्राहकत्वविरहाद्भट्टमत-सिद्धतादृशघटज्ञानशाब्दबोधसामग्रीभिन्नत्वस्य निरुक्तगुरुमतसिद्धसा-मग्र्यां सत्त्वेन तादृशसामग्रीमादाय तन्मते प्रमात्वे साध्यसत्त्वनि-र्वाहः। मुरारिमिश्रमतसिद्धघटज्ञानानुव्यवसायसामग्र्यामपि प्रामाण्या-ग्राहकत्वस्य भट्टमतसिद्धत्वेऽपि ज्ञानग्राहकत्वस्य भट्टमतसिद्धतया प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धाया घटज्ञान-शाब्दसामग्री तदन्यत्वस्य निरुक्तानुव्यवसायसामग्र्यां सत्त्वात्तादृशी-मनुव्यवसायसामग्रीमादाय मिश्रमते तत्र साध्यसत्त्वनिर्वाहः।

भट्टमते ज्ञाततालिङ्गकानुमितिसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वेऽपि प्रामाण्याग्राहकत्वेन भट्टमतासिद्धतया तादृशप्रामाण्याग्राहकत्वादिना भट्टमतसिद्धाया घटज्ञानशाब्दबोधसामग्र्या भिन्नत्वस्य निरुक्तज्ञाततालिङ्गकानुमितिसामग्र्यां सत्त्वात्तामादाय भट्टमते साध्यसिद्धिः । अत एव ज्ञानग्राहकत्वमात्रेण भट्टमतसिद्धभिन्नत्वनिवेशे गुरुमिश्रयोर्मतसिद्धायाः सामग्र्याः सङ्ग्रहसम्भवेऽपि भट्टमतसिद्धाया ज्ञाततालिङ्गकानुमितिसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धतया तत्सङ्ग्रहासम्भवात्प्रामाण्याग्राहकत्वेनेत्यादिकं न निरर्थकमित्यवधेयम् । केवलप्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वनिवेशे गुरुमतमिश्रमतसिद्धसामग्र्यसङ्ग्रहः स्यादतो ज्ञानग्राहकत्वेनेत्यादिदलम् । गुरुमिश्रमतसिद्धसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वाददोषः ।

तज्ज्ञानेत्यत्र तत्पदानुपादाने 'पटज्ञानं प्रमा' 'घटज्ञानं गुण' इत्याकारकसमूहालम्बनशाब्दबोधसामग्री प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च न भट्टमतसिद्धाऽपि तु केवलघटज्ञानशाब्दबोधसामग्र्येव तादृशत्वेन भट्टमतसिद्धा, तदन्यत्वस्य च निरुक्तसमूहालम्बनसामग्र्यां सत्त्वेन तज्जन्यग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रामाण्ये विरहाद्बाधः स्यादतस्तज्ज्ञाननिष्ठतत्प्रामाण्यव्यक्तिलाभार्थं तत्पदं, तथा च निरुक्तसमूहालम्बनशाब्दबोधसामग्र्याः घटत्ववति घटत्वप्रकारकज्ञानत्वरूपतत्प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया तदन्यत्वस्य तत्र विरहान्न तामादाय तत्र बाधप्रसक्तिः । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धसामग्रीभिन्नाया सामग्र्यां ज्ञानग्राहकत्वानुपादाने भट्टमते बाधो ज्ञानता-

प्रत्यक्षजनकसामग्र्या ज्ञानग्राहकत्वेन प्रामाण्याग्राहकत्वेन च भट्टमतसिद्धभिन्नतया तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे विरहात् । तदुपादाने तु न बाधो ज्ञाततात्प्रत्यक्षजनकसामग्र्या ज्ञानग्रहाजनकत्वात् । केवलघटसामग्र्यां तादृशत्वेन भट्टमतसिद्धभिन्नत्वसत्त्वेऽपि ग्रहजनकत्वेन तादृशभिन्नसामग्रीविवक्षणे घटसामग्रीमादाय बाधासम्भवाज्ज्ञातताप्रत्यक्षपर्यन्तानुसरणम् । अत्र च प्रामाण्याग्राहकत्वं प्रामाण्यग्रहफलानुपधायकत्वं वाच्यम्, अन्यथा घटज्ञानशाब्दबोधसामग्र्यामपि घटज्ञानं प्रमेत्याकारकप्रामाण्यविषयकशाब्दबोधस्वरूपयोग्यतया भट्टमतसिद्धत्वेन तद्भिन्नत्वस्य घटज्ञानशाब्दबोधसामग्र्यां सत्त्वात्तामादाय बाधस्य दुर्वारतापत्तिः स्यात् । एवं ज्ञानग्राहकत्वमपि ज्ञानग्रहफलोपधायकत्वं वाच्यम्, अन्यथा ज्ञानविषयो घट इत्याकारकोपनीतज्ञानविषयकघटप्रत्यक्षं प्रति गुरुमतसिद्धघटप्रत्यक्षसामग्र्याः स्वरूपयोग्यतया भट्टमतसिद्धत्वेन गुरुमतसिद्धसामग्रीसङ्ग्रहाऽनुपपत्तिः ।

वस्तुतः प्रामाण्यग्रहफलोपधायकताऽनवच्छेदकतया ज्ञानग्रहफलोपधायकतावच्छेदकतया च भट्टाभ्युपगतं यादृशं समुदायत्वं तादृशसमुदायत्वभिन्नं ज्ञानग्रहफलोपधायकताऽवच्छेदकीभूतं यत् समुदायत्वं तदवच्छिन्नसामग्रीजन्ययावद्ग्रहविषयत्वं मीमांसकमते साध्यं पर्यवसितम्, अन्यथा घटज्ञानशाब्दबोधसामग्रीणां यावतीनां यत्र 'घटज्ञानं प्रमा तादृशसामग्रीमत्त्वादि'त्याकारकप्रामाण्यानुमितिफलोपधायकत्वं सम्भवति तादृशस्थले प्रामाण्यग्रहानुपधायकत्वेन ज्ञानग्रहोपधायकत्वेन च निरुक्तशाब्दबोधसामग्र्या भट्टमतसिद्धभिन्नतया तज्जन्यघटज्ञानशाब्दबोधविषयत्वस्य प्रमात्वेऽसत्त्वाद्बाधः, अस्माकं मते

तु न बाधः शाब्दबोधसामग्रीनिष्ठसमुदायत्वस्य प्रामाण्यग्रहोपधायकतानवच्छेदकत्वेन भट्टमतसिद्धतया तदन्यत्वस्य तादृशसमुदायत्वे विरहात्। यद्वा प्रामाण्याविषयकज्ञानग्रहफलोपधायकतावच्छेदकतया यद्भट्टमतसिद्धं रूपं तद्भिन्नधर्मावच्छिन्नसामग्रीजन्ययावद्ग्रहविषयत्वं मीमांसकनये साध्यम्, तेन व्यवसायादिसामग्र्यन्तर्गतात्मादेः प्रामाण्याविषयकज्ञानग्रहजनकतया भट्टमतसिद्धत्वेऽपि न क्षतिः, तादृशव्यवसायाऽत्मादिघटितसमुदायत्वस्य प्रामाण्याविषयकज्ञानग्रहफलोपधायकतानवच्छेदकत्वेन भट्टमतसिद्धत्वान्न मिश्रमतसामग्र्यसंग्रह इति दिक्।

अथ प्रामाण्याग्राहकपरोक्षसासगीभिन्नत्वेनैव ज्ञानगाहकसामग्रीविवक्षणे लाघवसम्भवान्निरुक्तरीत्या गुरुतरनिवेशनं व्यर्थमिति चेन्न, ज्ञाततालिङ्गकानुमितिसामग्र्यां यत्काले प्रामाण्यग्राहकत्वानिश्चयस्तत्काले ज्ञाततालिङ्गकानुमितेः प्रामाण्यावगाहिताया असिद्धया भट्टस्योद्देश्यसिद्ध्यसम्भवापत्तेः। नैयायिकभट्टमतसिद्धानुमितिसामग्रीमादायापि साध्यसिद्धिपर्यवसानसम्भवः स्यात्। न च ज्ञानग्राहकत्वेन प्रामाण्याग्राहकत्वेन नैयायिकमतसिद्धभिन्नत्वं कुतो नोक्तमिति वाच्यम्, तथा सति मिश्रमतसिद्धतया अनुव्यवसायसामग्र्या असङ्ग्रहः स्यात्तादृशसामग्र्या ज्ञानग्राहकत्वेन प्रामाण्याग्राहकत्वेन च नैयायिकमतसिद्धतया तद्भिन्नत्वस्य तत्रासत्त्वात्।

यद्यपि प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन गुरुमतसिद्धभिन्नत्वस्य, तादृशत्वेन मिश्रमतसिद्धभिन्नत्वस्य च ज्ञानग्राहकसामग्र्यां विवक्षणे व्यवसायसामग्र्यनुव्यवसायसामग्र्योः संग्रहसम्भवः, व्यवसायसामग्र्यां गुरुमतसिद्धायां तन्मते ज्ञानग्राहकत्वसत्त्वेऽपि प्रामा-

ण्याग्राहकत्वस्याऽसत्त्वात् तादृशत्वेन गुरुमतसिद्धभिन्नत्वस्य तत्र सत्त्वाद् । एवं निरुक्तव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन मिश्रमतसिद्धत्वेऽपि ज्ञानग्राहकत्वेन मिश्रमतासिद्धतया व्यवसायसामग्रीसंग्रहः । अनुव्यवसायसामग्र्या मिश्रमतसिद्धायाः प्रामाण्याग्राहकत्वेन गुरुमतसिद्धत्वेऽपि ज्ञानग्राहकत्वेन गुरुमतासिद्धतया गुरुमतसिद्धसामग्रीभिन्नत्वेनाऽनुव्यवसायसामग्रीसंग्रहः । एवं निरुक्तानुव्यवसायसामग्र्या ज्ञानग्राहकत्वेन मिश्रमतसिद्धत्वेऽपि प्रामाण्याग्राहकत्वेन मिश्रमतासिद्धतया तादृशत्वेन मिश्रमतसिद्धसामग्रीभिन्नत्वस्याऽनुव्यवसायसामग्र्यां सत्त्वात्तत्संग्रहः । भट्टमतसिद्धज्ञाततालिङ्गकानुमितिसामग्र्याश्च तादृशत्वेन गुरुमिश्रादिमतसिद्धभिन्नत्वस्य सर्वदैव सत्त्वेन तन्मतसिद्धसामग्रीसंग्रहसम्भवः ।

तथापि घटज्ञानजन्यज्ञाततावान् घट इत्याकारकोपनीतघटज्ञानविषयकज्ञातताप्रत्यक्षजनकसामग्र्या गुरुमिश्रयोर्मते ज्ञाततायाः शशविषाणायमानतया प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन गुरुमिश्रमतसिद्धसामग्रीभिन्नत्वस्य तत्राक्षतत्वेन तादृशभट्टमतसिद्धसामग्रीजन्यग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रामाण्ये विरहेण भट्टमते बाधः स्यान्नतु गुरुमिश्रयोर्मते, तन्मते तादृशज्ञानग्राहिकायाः सामग्र्या एवाऽप्रसिद्धत्वादतस्तादृशत्वेन भट्टमतसिद्धभिन्नत्वोपादानम् । तदुपादाने तु न तत्र बाधः निरुक्तज्ञातताप्रत्यक्षजनकसामग्र्या घटज्ञानग्राहकत्वेनाभट्टमतसिद्धत्वेऽपि प्रामाण्याग्राहकत्वेनापि भट्टमतसिद्धतया तदन्यत्वस्य तादृशसामग्र्यां विरहात् । न च नाऽयं घट इत्याकारकबाधभ्रमोत्तरकाले लौकिकसन्निकर्षवशाद् घटव्यवसाये

सति तदनन्तरं जातो योऽनुव्यवसायस्तदीयविषयत्वस्य घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकज्ञानत्वरूपप्रमात्वे विरहान्मिश्रमतेऽपि बाधः नायं घट इत्याकारकबाधकाले घटत्ववत्त्वेन घटस्यानुव्यवसाये भानासम्भवादिति वाच्यम्, तत्रापि तादृशानुव्यवसाये घटत्ववत्त्वांशे निर्धर्मितावच्छेदकप्रमात्वस्य भानसम्भवेन बाधासम्भवाद् ।

ननु तथापि यथोक्तरीत्या भट्टमतसिद्धभिन्नत्वनिवेशे घटज्ञानकालीनपटत्ववति पटत्वप्रकारकज्ञानवानहमित्याकारकघटज्ञानोपनीतपटज्ञानानुव्यवसायविषयत्वस्य घटज्ञानप्रामाण्येऽसत्त्वान्मिश्रमते बाधस्तादृशानुव्यवसायसामग्र्या अपि भट्टैरनङ्गीकृतत्वात्तादृशघटज्ञानग्राहकसामग्र्याः पटज्ञानग्राहकसामग्र्या भिन्नत्वेऽपि घटज्ञानवानहं पटज्ञानवानित्याकारकानुव्यवसायसामग्रीमादाय मिश्रमते बाधो दुर्वार एवेति चेन्न, स्वाश्रयज्ञानभिन्नज्ञाननिष्ठप्रकारतानिरूपितात्मनिष्ठविशेष्यत्वानवच्छिन्नविशेष्यतानिरूपितस्वाश्रयज्ञाननिष्ठप्रकारताशालिग्रहजनकसामग्र्या एव ज्ञानग्रहजनकसामग्रीत्वेन विवक्षणीयत्वान्निरुक्तघटज्ञानोपनीतानुव्यवसायस्य साध्यघटकत्वं न सम्भवति पटज्ञाननिष्ठप्रकारताया ज्ञानान्तरघटज्ञाननिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितत्वात् ।

अथ घटत्वेन जलमाहरेत्यादौ योग्यतावशाद्यथा घटकरणकशाब्दबोधेऽपदार्थस्य छिद्रेतरत्वस्य भानं तथौदनकामकार्यताज्ञानविषयः पाक इत्याकारकशाब्दबोधेऽपि ओदनसाधनताज्ञानविषयतारूपयोग्यताज्ञानवत्वात्तादृशयोग्यत्वस्यौदनसाधनताज्ञानविषयत्वस्य शाब्दबोधे भानं भवतीति तादृशयोग्यताज्ञानघटितन्निरुक्तशाब्दबोधसामग्र्या ज्ञानग्राहकत्वेन भट्टमतासिद्धतया तज्जन्यग्रहविषयत्वस्यौदन-

साधनताज्ञाननिष्ठप्रमात्वे विरहाद्बाधो दुर्वार इति चेन्न, योग्यताज्ञानं हि शाब्दबोधे कारणं न तु योग्यतायाः शाब्दबोधे भानं भवतीत्यत्र कश्चिन्नियमो वर्त्तते मानाभावात् ।

घटज्ञानशाब्दबोधादिसामग्र्या प्रामाण्याग्रहेण बाधवारणाय ओदनसाधनत्वादिज्ञानस्य योग्यताबलाच्छाब्दबोधे भानाभ्युपगन्तॄणां मते तादृशशाब्दबोधे तज्ज्ञानप्रामाण्याग्रहाद्बाधवारणाय च अन्यमेव पन्थानमाश्रयतामन्येषां मतमाह दीधितौ—**अन्ये त्विति**। तथा च तत्प्रामाण्यविषयकज्ञानाजनकत्वेन नैयायिकमीमांसकोभयवादिसिद्धं यत्तदन्यज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वं मीमांसकनये साध्यमित्यर्थः। अनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयमतसिद्धभिन्नत्वात् संग्रहः। एवं गुरुमतसिद्धव्यवसायसामग्र्या भट्टमतसिद्धज्ञाततालिङ्गकानुमितिसामग्र्या अपि तत्प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयमतासिद्धतया संग्रहो बोध्यः। घटज्ञानशाब्दबोधसामग्र्याश्च तत्प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयमतसिद्धत्वान्न तामादाय मीमांसकनये बाधः। ओदनकामकर्तव्यताज्ञानविषयः पाक इत्याकारकौदनसाधनताज्ञानविषयकशाब्दबोधसामग्र्या योग्यताज्ञानघटिताया गुरुमतसिद्धाया अप्योदनसाधनत्वादिप्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयमतसिद्धतया न तादृशीं सामग्रीमादाय बाधः।

प्रामाण्याग्राहकत्वेन नैयायिकमतसिद्धभिन्नत्वनिवेशे व्यवसायानुव्यवसायसामग्र्योरसंग्रहः। न च तत्प्रामाण्याग्राहकत्वेन यन्मीमांसकमतसिद्धं तदन्यत्वमेव सामग्र्यां निवेश्यतामिति वाच्यं मीमांसकानामेकैकग्रहणेऽनुव्यवसायादिसामग्रीणां गुरुमते प्रामाण्या-

ग्राहकतयाऽसंग्रहापत्तेः। प्रामाण्याग्राहकत्वेन मीमांसकसकलमतसिद्ध-भिन्नत्वनिवेशे अनुव्यवसायादिसामग्र्यादेः संग्रहसम्भवेऽपि यथासन्निवेशे न वैयर्थ्यमिति ध्येयम्।

नैयायिकमतासिद्धायाः प्रामाण्याग्राहिकाया ज्ञाततात्रत्यक्ष-जनकसामग्र्या वारणाय तादृशोभयसिद्धभिन्नत्वं ज्ञानग्राहिकायां सामग्र्यामेव विशेषणम्। ज्ञानादौ द्रव्यत्वभ्रमजनकसामग्रीवारणाय ज्ञानग्राहकसामग्र्या तदभाववति तत्प्रकारको यस्तदग्राहकत्वं विवक्षणीयम्। **दीधितौ पूर्वोक्तदिशेति**। तथा च तत्प्रामाण्याग्राह-कत्वेन यन्नैयायिकमीमांसकमतसिद्धं तदन्या या व्यधिकरणप्रकार-काऽजनिका ज्ञानविषयकज्ञानजनिका सामग्री तज्जन्यग्रहविषयत्वं मीमांसकनये साध्यमित्याशयः।

एतन्मते 'ज्ञानमतीन्द्रियमि' त्याकारकानुमितेर्भ्रममनङ्गीकुर्वतां गुरूणां मतेऽलीकतया तादृशानुमितिसामग्र्याः सकलमीमांसकमत-सिद्धभिन्नतया व्यधिकरणप्रकारकाऽजनिकया भट्टमतसिद्धतादृश-सामग्र्या प्रामाण्याग्रहात्तन्मते बाध इत्यस्वरसोऽन्येत्वित्युक्त्या सूचित इत्यलं पल्लवितेन॥

अप्राप्य "**बलरामस्य**" शिष्यस्य विदुषो मम।
सहायतामतिश्रान्तिमतिचिन्ता कृता पुनः॥१॥
"**निर्दोषानन्द**" "**योगीन्द्रानन्द**"योर्मम शिष्ययोः।
प्राप्य साहाय्यमत्यन्तं "**दीपिका**" मुद्रिता मया॥२॥

इति श्रीवामाचरणभट्टाचार्यन्यायाचार्यविरचितायां प्रामाण्यवाद-दीपिकायां प्रथमविप्रतिपत्तिदीपिका समाप्ता।